दृष्टं॰ तथापितरजानानायाः अनुज्ञाविरहस्थलीयदाना रैपुत्रस्यापत्तिरजो वासिष्ठे अनुज्ञाभिवद्दानस्वातंत्र्यंकचिदिप्य इतियाज्ञवल्क्येन च विधवाया अधीना
सामान्यतस्तदनुज्ञाप्यऽभ्यनुज्ञातेतिकथंचिदनुज्ञापरतंत्राया आवश्यकी॰ नतुयाज्ञवल्क्ये मनाद्दस्य स्वतंत्रायाः अथतत्रापि प्रशस्तपित्रा स्वगानुज्ञयादाना
दिकं भवेदिति एतावता तुष्यतु भवानिति॰ मात्रादिदत्तेति केचित्तु इदं दत्तकपुत्रलक्षणं तथा च पितामहादिदत्तेऽतिव्याप्तिरतो माता पिता चेति॰ तत्र [illegible]वाकारोऽव्याप्ति
निरासार्थः॰ विधिं विना तथाच व्याप्तिरतोऽद्भिरिति॰ वासिष्ठोक्तविध्यर्थकं एवमनापदि असवर्णे वा दत्तेऽतिव्याप्तिरत आपदीति सदृशमिति च॰ पितृविरोधा सहमा
नेदत्तेऽतिव्याप्तिरतः प्रीतिसादिप्रतिग्रहीत्रा सह प्रीतियुक्तमित्यर्थ इत्याहुः तन्न॰ धर्मशास्त्रे तल्लक्षणे प्रयोजनाभावात् क्षत्रियाणां क्षत्रजातौ गुरुगोत्रसमेऽपि वेति
शौनकवाक्यविरोधाच्च॰ गुरुगोत्रसमेऽव्याप्तेः॰ अन्ये तु ब्राह्मणाय क्षत्रियेण दत्ते क्षत्रिये दत्तक इति लौकिकानामस्ति व्यवहारो तो लक्षणस्य व्यवहारफलक
त्वमतेनेदं लक्षणं॰ किंतु दत्तकपदप्रवृत्तिनिमित्तं तेनानापदि असवर्णे वा दत्ते न तत्प्रसंगः यथा पुत्रांगुर्वनुज्ञातो देवरः पुत्रकाम्यया॰ सपिंडो वा सगोत्रो
वाघृताभ्यक्तः सता वियात्॰ आगर्भसंभवाद्गच्छेत्पतितस्त्वन्यथा भवेत् अनेन विधिना जातः क्षेत्रजोऽस्य भवेत्सुत इति सर्वविशेषणवत्वं क्षेत्रजपदप्रवृत्तिनि
मित्तं न तु नियोगाभावे सत्यपि नियोगे घृताभ्यंगाभावे वा क्षेत्रोत्पत्तिमात्रेण तत्॰ अन्यथा अनियुक्तासुतश्चैव पुत्रिण्याप्तश्च देवरात्॰ उभौ तौ नार्हतो भागी काम ॥२९॥
जातकतस्करौ॰ नियुक्तायामपि पुमान्नार्यां जातो विधानतः नैवार्हः पैतृकं रिक्थं पतितोत्पादितो हि स इति मनुविरोधात्॰ न चोक्तवचनवशाद्गाभावे प्रथा

नमात्रेणक्षेत्रजत्वं नास्तीति सिद्धं॥ दत्तके तु आपत्साध्यंगाभावे प्रधानमात्रेण दत्तकत्वं भविष्यतीति वाच्यं॥ क्षेत्रजादीन्सुतानेतानेकादश यथोदितान्
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः इति मनुना यथोक्तानामेव क्षेत्रजादिव्यक्तिरंगसाकल्यस्यावश्यकत्वात्तस्माद्दनापत्तावसवर्णेषु च प्रवृत्तिनिमित्त
मेव नास्तीत्याहुः परे तु अविधिदत्ते अविधाय विधानं यं परिगृह्णातीति पुत्रकं॥ विवाहविधिभाजं तं न कुर्याद्धनभाजनं॥ स्वगोत्रेण कृता ये स्युः दत्तकक्रीतकादयः
विधिना गोत्रतां यांति न सापिंड्यं विधीयते इति वृद्धगौतमात्॥ असवर्णग्रहणेऽप्यस्यादन्यजातीयो गृहीतोपि च नंदनः॥ अंशभाजं न कुर्वीत मन्वादीनां मतं हितादिति
शौनकात्॥ अनापदि दाने विक्रयं चैव दानं च न नेयाः स्युरनिष्ठवः॥ दाराः पुत्राश्च सर्वस्वं स्वात्मन्येव तु योजयेत्॥ आपद्येव तु कर्तव्यं दानं विक्रय एव च अन्यथा तु न कर्तव्यमि
ति शास्त्रस्य निश्चयमिति माधवोदाहृतवचनाच्च विशेषणाभावे तिरस्थनिषेधमुखेन दत्तपुत्रत्वाभावो भवन् विशेषणवतीविशिष्टाभावः पुत्रत्वरूपविशेष्याभावे प
र्यवस्यतीत्याहुः॥ न विक्रियं चैव दानं च न नेयाः स्वसंततेर्दौर्गत्याभरणसामर्थ्यमेवापत्तत्॥ न तु गृहीतुरपुत्रत्वमपीति कुत इति चेत्॥ अन्याहितं याचितकमाधिसाधारणं
न्वयत॥ निक्षेपः पुत्रदारं च सर्वस्वं चान्वये सति आपद्यपि च कष्टायां वर्तमानेन देहिना अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतमिति नारदवचनदर्शनाद्धमद्भिः पु
२४ त्रमापरीत्यादौ विरोधो माप्रसांक्षीदिति विक्रियं चैव दानं च न नेयाः स्युरनिष्ठव इति दाने च निष्ठुरतया तत्परिहारस्यापि पर्यालोचनया पुत्रपालनासामर्थ्यस्ये
वापत्तित्वरूपत्वात्॥ अन्यथा दातृग्रहीत्रोरापत्तिभेदेन विरोधापत्तेर्न स्यात्॥ तस्मात्प्रतिग्रहीतुरपुत्रत्वं नापत्तिरिति॥ अथ दद्यादिति वसिष्ठवचने आपन्नोपात्तेन॥

तथाचमातापितृभ्यांतदन्यतरेणवाऽपत्तिंविनाप्यपुत्रायस्नेहविशेषादिनापुत्रदानंस्यात्तन्नचमन्वादिभिरापदिइत्युपात्तमेवेतिवाच्यं‥अपुत्रैकपुत्रयोर्दानादौद्यो

न दोषः अनापद्दानेदातुर्दोषइत्यादिग्रंथपर्यालोचयाकेनचित्कारणेनदोषमंगीकृत्यैवदानादौक्रियमाणेपुत्रत्वस्यदुर्निवारत्वात्सत्यं‧अस्तिहिआपद्यनुच

कर्त्तव्यंदानंविक्रयएवचअन्यथातुनकर्त्तव्यमितिशास्त्रस्यनिश्चयइतिकात्यायनेनस्पष्टमेवैवकारमभिधायान्यथातुनकर्त्तव्यमित्यभिधानंतेनतदतिक्रमेतद

वादृष्टविशेषात्सकपुत्रत्वानुत्पत्तेर्ध्वननात्‌ अन्यथादुष्टरत्नादेरत्नत्वाद्यपरिहारवदापत्सत्वेपुत्रे दत्तेपुत्रत्वात्यागः शंक्यतेतितथाभिधानस्याफल्यात्‌०

एवमदेयंपश्चगृह्णातियश्चादेयंप्रयच्छतितावुभौचोरवच्छास्योदंड्यौचोत्तमसाहसमितिवचनात्प्रतिग्रहीतुर्दातुश्चोरतुल्यतयाचोरगृहीतद्रव्यस्वत्वानुदयाच्च

किंचापदीतिनिमित्तसप्तम्यानैमित्तिकेनिमित्तवतएवाधिकारःतथाचानापद्दानेदानाच्चरूपासिद्धिः‧दत्ताप्रदानिकेभर्त्राद्यनुमतिंविनास्त्र्यादिकृतेदाने

दानस्वरूपाभावमितिवत्‌‧एवंआपत्तिंविनाविक्रयेपीतितदुपादानं॥सदृशंसवर्णं‧नचैवंअसवर्णदानेदातुर्दोषइत्येवस्यादितिवाच्यं‧आपद्येवचकर्त्तव्यमित्य

नेनानापद्दानंनिषिध्यतेनत्वसवर्णस्यतेनान्येनवाकेनचित्‌ तस्मात्तत्रनिषेधाभावेनदोषकल्पनानवकाशोपितस्यविशेषणतावच्छेदकत्वपर्यालोच

नयाविवक्षितत्वात्‌तादृशस्यपुत्रत्वाभावसमर्पकत्वात्‌ भर्त्रनुज्ञयेति‧निषादस्थपतिवत्स्त्रीशूद्रयोःप्रतिग्रहेऽधिकारः तत्रनस्त्रीपुत्रंदद्यात्प्रतिगृह्णीयाद्वान्यत्रानु ॥२२॥

ज्ञानाद्भर्तुरितिनिषेधस्यैतस्यान्यत्रानुज्ञानाद्भर्तुरित्यस्यप्रतिगृह्णीयादित्यत्राप्यन्वयइतिभावः॥केचित्तुसत्यमेवनप्रतिगृह्णीयादित्यनंतरमन्यत्रानुज्ञानाद्भर्तुरितिस्मर्यंते

तथापितस्यनस्त्रीपुत्रंदद्यादित्यत्रैवसंबंधः माता पुत्रंदद्यादितिविधेः सत्वात् नस्त्रीपुत्रंदद्यादितिनिषेधेचविकल्पापत्तिरतस्तदन्वयेनानुज्ञातामातापुत्रंद
द्यादित्यर्थात् स्त्रीपुत्रंप्रतिगृह्णीयादितिविध्यभावेनतदन्वयस्यनिष्फलत्वात् नचस्त्रीपुत्रंनप्रतिगृह्णीयादितिनिषेधवैयर्थ्यमितिवाच्यं अपुत्रः पुत्रंप्रति
गृह्णीयादितिविधिसत्वेनतत्सार्थक्यात् नचसामान्यतः प्राप्तस्यविशेषतोनिषेधेपिविकल्पोदुर्वारइतिवाच्यं नरात्रौश्राद्धंकुर्यादित्यत्रापिविकल्पापत्तेः यदि
चवस्तुतस्तेपर्युदासएवरात्रिभिन्नेश्राद्धंकुर्यादितिसामान्यविध्येकवाक्यतापन्नात्तदाऽयमपिस्त्रीभिन्नोऽपुत्रः पुत्रंगृह्णीयादितिसामान्यविध्येकवाक्यता
पन्नैवनिषेधः वस्तुतोरागप्राप्तएवनिषेधः नचैवंव्यवहितान्वयप्रसंगइतिवाच्यं भर्त्राप्रीतेनयद्दत्तंतेतस्मिन्स्त्रियोपितत्स्यायथाकाममश्नीयाद्दद्याद्वास्थावरादृते
दत्तमित्यन्वयेनतात्पर्यसत्वेव्यवहितयोजनोपगमात् नचतत्रतस्यतदित्यत्रान्वयेनस्थावरादृतेतदश्नीयादित्यन्वयः सुकरइतिवाच्यं तथासतिस्थावरेस्त्रीस
त्वापत्तेः स्थावरेप्रीतिदत्तेपिपुत्रस्वत्वस्यैवेष्टत्वात् एवंचस्त्रियोग्निविद्याकल्पनमपिनास्ति अन्यथाप्रतिग्रहांगहोमानुरोधेनाग्निमंत्रपाठयोरपिरथकारवत्क
ल्पनापत्तेः नचतत्रविप्रद्वाराहोमः सुकरइतिवाच्यं एवमपिदेवस्यत्वेतिमंत्रेणहस्ताभ्यांपरिगृह्यच अंगादंगेत्यृचंजप्त्वाआजिघ्रेच्छिशुमूर्धनीतिप्रतिग्रहांग
23 मंत्रपाठबाधापत्त्याविप्रद्वारातत्कल्पनापत्तेः नचैवंपिंडोदकक्रियाहेतोर्नामसंकीर्तनस्यचेत्यस्यहेतोः पुरुषमिवस्त्रियंप्रत्यविशेषात्तत्तस्याः प्रतिग्रहाधिकारः से
त्स्यतीतिवाच्यं तेनस्वत्वंक्रियतइतिहेतुर्यथाशूर्पेणजुहोतीत्यनेनबाधात्स्थालीपिठरादौनप्रवर्ततेतथोक्तहेतुरविद्वत्त्वादिनाबाधात्स्त्रियांनप्रवर्ततेइत्यस्य

वसुक्तत्वात्‌नचकलावन्येषांपुत्राणांवर्जितत्वात्‌अनायस्याद्दत्तकःस्त्रीकार्यएवेतिवाच्यंभवन्मतेपत्युरनुज्ञयासधवायाःकथंचिद्विधवायाःदत्तकोवाच्यः
सव्यर्थःअनेकानिसहस्राणिकौमारब्रह्मचारिणांदिवंगतानिविप्राणामकृत्वाकुलसंततिंमृतेभर्त्तरिसाध्वीस्त्रीब्रह्मचर्यव्रतेस्थितास्वर्गंगच्छत्यपुत्रापि
२३ यथातेब्रह्मचारिणइतिमनुनाऽपुत्रायाअपिस्वर्गप्राप्तेरभिधानात्‌अपुत्राशयनंभर्त्तुःपालयंतीव्रतेस्थितापत्न्येवदद्यात्तत्पिंडंकृत्स्नमंशंलभेतचेतिवाक्येअ
पुत्रेत्यधिकारिसंकोचकविशेषणोपादानेनपुत्रप्रतिग्रहेव्याप्तेर्गर्भीकृतत्वाच्च·ननुअन्यत्रानुज्ञानाद्भर्त्तुरित्यस्यनस्त्रीपुत्रंदद्यादित्येतावन्मात्रान्वयित्वेप्रति
गृह्णीयाद्वेतिवाशब्दान्वयोनुपपन्नः·विकल्पासंभवात्‌नचवाशब्दःउपमार्थकः·तथासतियथाभर्त्रनुज्ञयाप्रतिगृह्णीयात्तथाभर्त्रनुज्ञयादद्यादित्यर्थेस्त्रि
याःप्रतिग्रहाधिकारापत्तेरितिचेत्‌नवाशब्दस्योपमानार्थकत्वात्‌यथास्त्रीनप्रतिगृह्णीयात्तथाननुज्ञातास्त्रीनदद्यादित्यर्थसंभवात्‌अथवावाशब्दः
समुच्चये·स्त्रीनप्रतिगृह्णीयादननुज्ञातास्त्रीनदद्याच्चेत्यर्थइत्याहुःतदेतद्रमणीयमेव·अस्तिहिनस्त्रीपुत्रंदद्यात्प्रतिगृह्णीयाद्वासहिसंतानायपूर्वेषामि
तिवासिष्ठेसहिसंतानायपूर्वेषामितिहेतुःतत्रतेनयत्नंक्रियतेइत्यादिर्हेतुःस्यात्‌लीपिकरादीसाधारण्याच्छूर्पेणवाधान्नविवक्षार्हःअयंतुविवक्षितःसाधार
ण्यादितिभर्तुःस्वस्यचसंतानानुवृत्तयेऽपुत्रायाःप्रतिग्रहआवश्यकःस्मर्यतेचगांधार्याःपठंतिचअपुत्रामृतपुत्रावापुत्रार्थंसमुपोष्यचेत्यादिप्रयोगविधि ॥२३॥
मपिपेशीप्रसवानंतरंव्यासवचनेनशतविभागेदौहित्रजलोकावाप्त्यर्थंतत्प्रार्थनयाकन्याभागोव्यासेनानुज्ञातःप्रकृतेचसंतानजन्यलोकावाप्त्यर्थंसकल
त्र·

24

परैकवाक्यतयासधवायाविधवायाश्चापुत्रप्रतिग्रहेऽधिकारः नहि पातिव्रत्यमात्रात्सांतानिकलोकसंभवः यदपि तन्मात्राद्भर्त्रा सह समानलोकावाप्तिस्म
र्यते तदपि भर्तुः संतानिकलोकासत्वे कथं तत्प्रापकं तस्माद्भर्तुः तल्लोकार्थं स्त्रियः प्रतिग्रहविधिः वाशब्दश्चाविकल्पार्थ एवान्यतरार्थपर्यवसायी तस्य
क्रियायामेवान्वयः तथा च यथा माता पिता वा दद्यातामित्यत्र मातृपित्रन्यतरासत्वे तदन्यतरो स्त्री स्तथा दद्यादित्यर्थ दानप्रतिग्रहयोरन्यतराभावे त
दन्यतरत्त्वभर्त्रनुज्ञां विना न कुर्यादित्यर्थः तस्मादापत्तियुक्तो मातृपित्रन्यतरः पुत्रदानं कुर्यादिति न एकस्य एव विधिः गौरवात् नस्त्रीपुत्रमिति निषेधपर्यालोच
नयाविकल्पापात्ताच्च किंतु आपत्तियुक्तः पिता पुत्रं दद्यात् आपत्तियुक्ता माता पुत्रं दद्यादिति दानविधिः एवं अपुत्रः पुमान् ब्राह्मणादिः पुत्रं प्रतिगृह्णीयात् अपुत्रा
ब्राह्मण्यादिः पुत्रं प्रतिगृह्णीयादिति द्वे प्रतिग्रहविधी अपुत्रो ब्राह्मणः कुर्यात् पुमान् पुत्रप्रतिग्रहं सपत्नीकक्रियार्थं चन कांता केवला क्व चिदिति मानवे पु
मानिति दर्शनात् सपत्नीकक्रिया पुत्रोत्पत्तिः अत्र भर्तृसान्निध्ये कांतायाः प्रतिग्रहासंभवान्न कांता केवलेति यथाश्रुतनिषेधो नोपपद्यते ततो भर्त्रनुज्ञातैव के
वला कांता प्रतिग्रहं कुर्यात् तत्राननुज्ञातेति न स्त्री पुत्रं प्रतिगृह्णीयादन्यत्रानुज्ञानाद्भर्तुरिति विधिलाभः आपत्तियुक्ता माता पुत्रं दद्यादित्येतावन्मात्रोक्तौ भर्तृसा
न्निध्यादावपि स्यात् तं त्रेयेण केवलायास्तस्या दातृत्वापत्तिरतः भर्त्रनुज्ञातैव केवला माता पुत्रं दद्यादिति तं निष्कर्षः स्त्रीकार्यः अतो न विकल्पप्रसंगः अत एव
कारस्यान्ययोगव्यवच्छेदो पर्स एवन स्त्री पुत्रं दद्याद्दन्यत्रानुज्ञानाद्भर्तुरित्यनेन न विरोधः उक्तं च दीधितिकृता चैत्रेणैव पच्यते इत्येमनमित्यादौ चैत्रान्यकर्तृकपाककर्म

त्वाश्रूयंतेभन्नचैत्रकर्तृकपाकर्मेत्यर्थः चैत्रेणैवपच्यतेगगनमित्यादिप्रयोगवारणायविशेष्योपादानमिति·नत्वयोगव्यवच्छेदोऽर्थः तथात्वसेवकारवैयर्थ्य
र्थ्यप्रसंगात्एतेननस्त्रीपुत्रंदद्यात्प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्तुरित्यत्रनञ्द्वयंव्यर्थंअनुज्ञातास्त्रीदद्यात्प्रतिगृह्णीयाच्चेत्यस्येवसम्यक्त्वादिति
नशंक्यंनञ्द्वयस्यापिसामान्यवाक्यलब्धानन्नुज्ञातस्त्रीकर्तृकदानादेर्हुवारत्वात्·अन्यथासामान्यवाक्यस्यनिर्विषयत्वापत्तेः अनन्नुज्ञातैवेत्येवकारस
त्वेनिषेधागर्भनयाशेषापुत्रत्वयोरलाभाच्च·नचैवंस्त्रीपुत्रंदद्यादन्यत्रानुज्ञानाद्भर्तुरित्यादिवाक्येतरसामान्यवचनानुपगमेस्त्रियः दानप्रतिग्रहयोरविधान
प्रसंगइष्टापत्तौचस्त्रियस्तत्कर्मणोलौकिकत्वापत्त्यादत्तकस्वरूपादृष्टानुसारप्रसंगइतिवाच्यं·तर्हिअनन्नुज्ञातमात्रत्वाभावविशिष्टमात्पितृगतापतिमात्रत्वे
वदानाधिकारितावच्छेदकत्वोपगमेनैतद्दोषस्यवारणीयत्वात्·यत्त्वंप्रतिग्रहवाक्येपितुल्यं·अथवायथादीक्षितोनददातिनजुहोतीतिसामान्यतः प्राप्तानुवादेनापि
निषेधः तथाइहापिसामान्यतः प्राप्तानुवादेनैवनस्त्रीपुत्रंदद्यादित्यादिनिषेधइत्यादीति·अत्रविशेषणेनिषेधसंक्रमाद्दानइवप्रतिग्रहेपिस्त्रियाअधिकार
इत्यभिप्रेत्येवभर्त्रनुज्ञयास्त्रियाअपीत्युक्तं·अदृष्टरूपमिति·पुत्रंप्रतिग्रहीष्यन्नित्यादिकेपुत्रप्रतिग्रहविधौपुत्रमितिद्वितीयावशात्पुत्रस्यभाव्यत्वेज
न्यपुंस्त्वरूपपुत्रत्वस्यभाव्यत्वासंभवाददृष्टंभाव्यमंतीकार्यं·तदेवचश्राद्धादिसकलपुत्रकार्यप्रयोजकमित्यर्थः·स्त्रियाश्चेतितथाचतस्याःप्रतिग्रहेकथ ॥२४॥
मधिकारइत्यभिमानः अत्रचदत्तकेपितृश्राद्धाद्यधिकारितावच्छेदकंअदृष्टंऔरसेतुजन्यपुंस्त्वमेवेतिप्रसिद्धं·अथवाऔरसेप्यदृष्टमेवतथाअन्यथौरसपौनर्भ

वाः विनियुक्तासुतानामविशेषापत्तेः जन्यपुंस्त्वस्यसमत्वात् गर्भाधानस्याकरणात्तस्यां नातस्तुदुष्यतीत्यादिवचनाद्गर्भाधानादिकर्माधीनादृष्टसत्वाच्च·
एवमेवहोमातिरिक्तः सर्वोपिग्रहणप्राशनपर्यंतगोचरोनियमः क्रीतस्वयंदत्तकृत्रिमापविद्धेष्वपियथासंभवंद्रष्टव्योऽदृष्टार्थत्वादितित्रिंशच्छ्लोकीटी
कायांलिखद्भिर्विवेचनकारैः क्रीतादिष्वदृष्टस्यप्रापणाच्च· पुत्रिकापुत्रेप्यदृष्टंसुप्रसिद्धमेव· एवमेवक्षेत्रजगूढजकानीनपौनर्भवेस्वयंकृतसंहो
ढजेष्वदृष्टंक्षेत्राद्यधीनमस्त्येव· अतएवद्वादशविधपुत्रेतरस्यलौकिकपुत्रत्वेपिनाधिकारइति· वस्तुतस्तुजन्यपुंस्त्वमेवपितृश्राद्धाद्यधिकारितावच्छेद
कं अन्यथागर्भाधानंविनाजातस्यतल्लोपापत्तेः अत्रचक्षेत्रजत्वादिकंनानैवतथैतिव्रतादिवदिति· स्त्रियाः व्रतादिहोमादौब्राह्मणेनवैदिकमंत्रः पठनीयः बा
धकाभावात् स्त्रीशूद्रयोरेवाध्ययननिषेधात् एतावतास्त्रियाः दानद्रव्यप्रतिग्रहेऽधिकारं प्रसाध्यशूद्रस्यापितदुभयत्रतमाह एवमितिशूद्रस्यापीति·
प्रतिग्रहोक्तेः रित्यनुवर्त्ततेअधिकारइतिशेषः अतएवशूद्रस्यप्रतिग्रहोक्तेरेव· कर्तृकहोमइतिसमंत्रकपदंगर्भं· पराशरेणेति· उपवासोव्रतंहोमस्ती
र्थस्नानजपादिकंविप्रैः संपादितंयस्यसंपन्नेतस्यतत्फलमितिवदताइतिशेषः· वाक्यांतरमपिदर्शयति· दाक्षिणार्थमिति· अत्रविप्रोदाक्षिणार्थंशूद्रस्य
होमंकुर्यादित्यपिलभ्यतेतत्रानिंदायामाहात्रेति· प्रतिग्रहादिमंत्रोपिब्राह्मणेनैवपठनीयइत्यपिबोध्यं· नचस्त्रीशूद्रयोर्होमस्वव्यक्तस्थापनंव्यर्थंतेनवि
नाअदृष्टरूपदत्तकत्वासंभवात् तयोः प्रतिग्रहमंत्रस्याप्यभावात् तस्यब्राह्मणद्वारासंपादनेनतुहोमस्यापितथासंपादनसंभवात् इत्थमेवचधा

र्मिकायांहोमसाध्यंदत्तकत्वमितिघंटाघोषवसिष्ठः पुत्रंप्रतिग्रहीष्यन्बंधूनाहूयराजनिचावेद्यनिवेशनस्यमध्येव्याहृतिभिर्हुत्वाअदूरबांधवंबं
धुसंनिकृष्टमेवप्रतिगृह्णीयात् संदेहेचोत्पन्नेदूरेबांधवमिवस्थापयेत् विज्ञायतेह्येकेनबहूंस्त्रायतइति बंधुसन्निकृष्टंभ्रातृपुत्रादिकंदूरेस्थापयेत्
तेननव्यवहरेत् अपुत्रस्यपुत्रकरणावश्यकत्वंद्योतयतिविज्ञायतेइतिश्रूयतेस्यर्थः एकेनअनौरसेनापिपुत्रेणबहून्पित्रादीन्नरकात्त्रायतेइति
श्रुत्यर्थइति अत्रादूरबांधवमित्यनेनभ्रातृपुत्रादिरुक्तः अदूरबांधवंसहितदेशभावर्त्तिपित्रादिकंज्ञातकुलशीलमन्यमपि परीक्षितस्यापिकथं
चिद्बालण्यादिसंदेहेउत्पन्नेयावत्तन्निवृत्तिः केचित्तुएकभ्रातुःसपुत्रत्वेद्वितीयभ्रातुःपुत्रप्रतिग्रहेनाधिकारः अपुत्रेणैवकर्तव्यःपुत्रप्रतिनिधिः
सदेतिबौधायनेनैवकामदानात् नचैतावताऽपुत्रत्वंकथंनास्तीतिवाच्यंबहूनामेकपुत्राणामेकश्चेत्पुत्रवान्भवेत्सर्वेतेतेनपुत्रेणपुत्रिणोमनुरब्र
वीदितिमनुनाभ्रातृपुत्रस्यपुत्रत्वोक्तेः येप्येकजाताबहवोभ्रातरस्तुसहोदराः एकस्यापिसुतेजातेसर्वेतेपुत्रिणोमताः बह्वीनामेकपत्नीनामेषएव
विधिस्मृतः एकाचेत्पुत्रिणीतासांसर्वासांपिंडदस्तुसइतिबृहस्पतिवचनाच्च अन्यथासपत्नीपुत्रस्याकृतस्यापिपिंडदानाद्यधिकारात्पुत्रत्वंनि
र्विवादंतद्वत् अकृतस्यैवभ्रातृपुत्रस्यापुत्रपितृव्यपुत्रत्वमपि अपुत्रस्यपितृव्यस्यतत्सुतोभ्रातृतोभवेत्सएवतस्यकुर्वीतश्राद्धपिंडोदकक्रियादि ॥२५॥
तिबृहत्पराशरवचनाच्च यैस्तुएतन्मन्वादिवचनंभ्रातृपुत्रस्यसपत्नीपुत्रस्यचपुत्रीकरणसंभवेअन्येषांतन्निषेधार्थं नत्वकृतयोस्तयोःपुत्रत्व

दूरंमिताक्षरादत्तं

प्रतिपादकं पुत्रो हि सर्वेभ्यः प्राक् पिंडदानरिक्थग्रहणयोरधिकारी न च भ्रातृपुत्रस्य पत्न्यादिभ्यः प्राक् श्राद्धे रिक्थग्रहणे वाधिकारः पुत्रः
कुर्यात्पितुः श्राद्धं पत्नी च तदसन्निधौ। धनहार्यं पदौहित्रस्ततो भ्राता थ तत्सुतः इत्यादि कालादर्शोक्तसंग्रहवाक्येन श्राद्धे पत्नीदुहितर
श्चैव पितरौ भ्रातरस्तथा तत्सुता गोत्रजा बंधुशिष्यसब्रह्मचारिण इति याज्ञवल्क्येन रिक्थे च व्यवहिताधिकारोक्तेरिति तन्न सम्यक्। कालि
कापुराणे अपुत्रस्य गतिर्नास्ति श्रूयते लोकवेदयोः इति ऋषीणां प्रश्ने अपुत्रस्य गतिर्नास्ति प्रेत्य चेह च सत्तमाः स्वपुत्रैः भ्रातृपुत्रैश्चैव पुत्र
वंतो हि संमता इति मार्कंडेयोत्तरवाक्ये भ्रातृपुत्रेण पुत्रिलोकस्यात तत्सत्वे अपुत्रत्वविरोधात्। न च पिंडदानादौ व्यवहिताधिकारविरोध
इति वाच्यं। मनुना बृहस्पतिना च भ्रातुः पुत्रस्य सपत्नीपुत्रस्य च पुत्रत्वमतिदिश्यते। अतिदेशविषयश्चाव्यवहितोपस्थितो भवतीति भ्रा
तृपुत्रस्य सपत्नीपुत्रस्य च और्ध्वदैहिके अव्यवहिताधिकारात्। विदध्यादौरसः पुत्रो जननी चौर्ध्वदैहिकं तदभावे सपत्नीजः क्षेत्रजा
द्यास्तथा दत्ता। तदभावे पतिः तस्यास्तदभावे सपिंडक इति कालादर्शे कात्यायनोक्तेश्च। तत्तुल्यन्यायेन भ्रातुः पुत्रस्याप्यव्यवहिताधिकारसिद्धेः
तस्य व्यवहिताधिकारबोधकवाक्यं तु नौरसभ्रातृपुत्रविषयं। तथा च सर्वज्ञनारायणः भ्रातॄणामेकजातानामिति मनुवचनं भ्रातृपुत्रसत्वे
26 ऽन्येषां पिंडदानाधिकारनिषेधपरमित्याह। न चैवं पुत्रं प्रतिग्रहीष्यन्नित्यादि निवेशनमध्ये व्याहृतिभिर्हुत्वा अदूरबांधवं बंधुसन्निकृ
ष्टमेव गृह्णीयादिति प्रथमांतपाठात् वसिष्ठेन बंधुसन्निकृष्टं बंधुद्वारा सपिंडमिति भ्रातृपुत्रस्य पुत्रीकरणोक्तेः विरोध इति वाच्यं। मिताक्ष
रादौ बंधुसन्निकृष्ट एव गृह्णीयादिति प्रथमांतपाठस्य ... भ्रातुः संनिकृष्टं प्रतिग्रहे सति प्रतिग्रहीतृमरणानंतरं निर्विवादमंशलाभ

सिद्धेः हे माद्भ्यारे च बंधुसन्निकृष्टमेव गृह्णीयादिति द्वितीयांतपाठात्ः तत्रापि क्रियाविशेषणतया बंधुसन्निकृष्टं यथा स्यात्तथा पुत्रं प्रतिगृह्णीयादित्य
र्थादुक्तार्थपर्यवसानात्ः नहि एतावता भ्रातृपुत्रस्य पुत्रीकरणप्राप्तिः संभवति· वस्तुतस्तु बंधुश्चासौ सन्निकृष्टश्चेत्यर्थः बंधुत्वं गोत्रजत्वं· तथा च
गोत्रजत्वेन सन्निकृष्टो मुख्यः तदभावेऽसगोत्र इति विवक्षितं स्वगोत्रजसुतालाभे कार्येऽन्यगोत्रजमिति शाकल्यात्ः यस्तु अदूरबांधवमसन्निकृष्
मेव गृह्णीयादिति माधवादिपाठः तत्रासन्निकृष्टं भ्रातृपुत्रादिव्यतिरिक्तमिति तद्व्याख्यानं असंबंधिनमिति अपरार्कव्याख्यानं चेति न कश्चिद्विरोधः
न चापुत्रीकृत एव भ्रातृपुत्रश्चेत्सपिंडदस्तदा तस्य रिक्थहारित्वापत्तिः सपत्नीपुत्रवदिति वाच्यं दृष्टापत्तेः अथवा पश्चार्धे हरः सपिंडदायीति प्रापिकं राजा
द्वैव्यभिचारात्तत्तु नियमः एवं च भ्रातृपुत्रस्य स्वस्थानमस्तु रिक्थहारित्वं पिंडदत्वं चौरसाभाव एव पुत्रीकरणं विनापीति यत्र च भ्रात्रा पुत्रग्रहणानंतरं
तद्भ्रातुः पुत्र उत्पन्नः भ्रातृपुत्रमननुरुध्य वा पुत्रग्रहणं कृतं तत्र दत्तकस्यैव पिंडदत्वमिति· तदेतन्मश्चद्धीमहि· अपुत्रस्यैव भ्रातृपुत्रस्य पुत्रत्वे पुत्रत्रयोदश
त्वापत्तेः पुत्रान्द्वादश यानाह नृणां स्वायंभुवो मनुः· तेषां षड्बंधुदायादाः षडदायादबांधवा इति तद्द्वादशत्वविरोधात्ः भ्रातृणामेकजातानामिति वाक्यमालंब्यो
क्तं च विज्ञानेश्वरेणापि· इदं भ्रातृपुत्रस्य पुत्रीकरणासंभवेऽन्येषां पुत्रत्वनिषेधार्थं न पुनः पुत्रत्वप्रतिपादनाय· तत्सुतादूरस्य नेन न विरोधादिति· न च व्यवहिताधिका
रबोधकवाक्यमनौरस भ्रातृपुत्रविषयमित्युक्तमिति वाच्यं· तथा वक्तुमशक्यत्वात्ः तथा हि किमौरसाभावे औरसो भ्रातृपुत्रः ततः पुत्रिकापुत्रादिः क्षेत्रजादि ॥२५॥
र्वा किं वा द्वादशविधपुत्राभावे सः ततः पत्न्यादिः आद्ये पिंडदोंशहरश्चेषां पूर्वाभावे परः परः इत्यनेन न विरोधः· द्वितीयेपि अविभक्तस्य भ्राता विभक्तस्य पत्नीत्यनेन
विरोधः· न च तर्हि भ्रातृपुत्रस्य पुत्रत्वप्रतिपादकवाक्यविरोधः नापुत्रस्य लोकोस्तीति इत्युपक्रम्य जायमानो वै ब्राह्मणस्त्रिभिरृणवा जायते यज्ञेन देवेभ्यः प्रजया

पितृभ्यः ब्रह्मचर्येण ऋषिभ्यः इत्यादिशास्त्रबोधितस्याप्रजत्वप्रयुक्तदोषस्य भ्रातृपुत्रेणापि निवृत्तिबोधकत्वात्। युक्तं चैतत् स्वपुत्रेणेव भ्रातृपुत्रेणापि पिं
डाविच्छेदपरिहारसंभवात्। पत्न्यादिभ्यः पूर्वं कश्चिन्मम पिंडदानरिक्थाधिकारी भवेदिति कामनया भ्रातृपुत्रस्य दत्तकविधिना स्वीकारस्यौचित्या
द्वर्जितत्वाच्च। किंच सदृश एव प्रतिनिधिरिति षाष्ठः प्रतिनिधिन्यायः तेन च पुत्रसदृश एव पुत्रप्रतिनिधिः सिध्यति। तथा च मन्वादिवाक्यघृष्टु
तप्रतिग्रहादिकल्पनक्लेशः नापि मिताक्षरादिविरोधः नापि भ्रातृपुत्रस्य याज्ञवल्क्याद्युक्तपंचमस्थाननिवेशभंगः पुत्रीकृतस्य प्रथमस्थाननिवेर
शेप्यतथाभूतस्य तदुक्तेः। किंच कालिकापुराण एव शंकरसुतयोर्वेतालभैरवयोर्मध्ये भैरवपुत्रस्य तज्ज्ञातानंदिवाक्येन पुत्रार्जने प्रवृत्तेन वेतालेन पुत्री
करणं स्मर्यते। ततः कदाचिद्दृष्ट्वा भैरवो मैथुनं गतः तस्यां संजनयामास सुवेशं नाम पुत्रकं तमेव च चक्रे तनयं वेतालोपि स्वकं सुतमिति। न चात्र पुत्रीकरणं
न प्रतीयत इति वाच्यं। तस्य भ्रातृपुत्रमात्रेणास्वीयत्वसिद्धेः तमेव तनयं स्वकं सुतं चक्रे इत्युपपद्यानविरोधात्। स्वीयसुतानुष्ठानस्यैव वंशवृद्ध्यर्थत्वादिति।
भ्रातॄणामेकजातानामित्यत्र भ्रातृपदं भ्रातृभगिन्योः परस्परपुत्रवारणार्थं। अग्निमभागिनेयनिषेधेन तुल्यन्यायेन भ्रात्रीयनिषेधस्यापि लाभादिति
केचित्। एकजातपदं च भिन्नोदराणामेकपितृकाणामपि सपिंडांतरलाभसत्वे पुत्रवारणार्थं। ननु सर्वथाभिन्नोदरभ्रातृपुत्रस्याग्राह्यत्वार्थं। तन्नि
षेधस्यानुपलंभात्। एक इति एकोपीत्यर्थः तेन द्वयोः पुत्रवत्त्वे अन्येषामपुत्राणां न भ्रातृपुत्रग्रहणासंभवः पुत्रवानित्यत्र पुत्रे कापि संख्या न प्रतीयते प
जपुरुष इत्यादौ राज्ञि तत्प्रतीतेरभेदैकत्वसंख्याप्रस्तावेशाद्विके निराकरणात्। एतेन पुत्री पुत्रा वा विद्यंते यस्येति विग्रहाद्द्व्यादिसंख्याप्रतीत्या न त्वेवैकं पुत्रं
दद्यादिति निषेधोनर्थक इति प्रयुक्तं। संख्यांशे उदासीनतया तन्निषेधोपपत्तेः। पुत्रपदं चौरसपरं तेन न दत्तकादेः पुत्रीकरणाप्तिः। अत्र तेनेत्येकवचनं पुत्रिण
27 इति बहुवचनं न च विवक्षितं अन्यथा [illegible] बहवोप्येकं पुत्रं युगपत्प्रतिगृह्णीयुरिति विधिकल्पनापत्तेः यत्र द्वौ एकपुत्रौ द्वौ च भ्रातरौ तदनुरोधेन तदविवक्षा

याआवश्यकत्वाच्च॥ अन्यथापुत्रैकत्वस्यमात्रो बहुत्वस्यचबाधेनपुत्रमेवनस्यात्॥ केचित्तुदत्तकेपुत्रप्रतिनिधित्वंपालकेचपितृप्रतिनिधित्वमित्याहुः दत्तकेपुत्रत्वंपाल
केपितृत्वमितिमिताक्षरा॥ मतद्वयेपिजनकोयथापुत्रस्यपोषणसंस्कारादिकंकरोतितथापालकोपिदत्तकस्यतत्कुर्यात्॥ यथाचौरसपितुराज्ञादिपालयतितथाज्ञादि
कंचकरोतितद्दत्तकःकथंचगृह्णातितत्सपिंडादिविवाहंनकरोतितथादत्तकोपिपालकस्याज्ञांपालयेत्॥ तथाज्ञांकुर्यात्तद्दत्तकथंगृह्णीयात्॥ तद्गोत्रसपिंडयोःकन्यां
चवर्जयेदितिअयंतुविशेषः दत्तकानंतरंऔरसेउत्पन्नेचतुर्थांशंदत्तकोगृह्णीयात्॥ उत्पन्नेत्वौरसेपुत्रेचतुर्थांशहराःसुताःसवर्णाअसवर्णास्तुग्रासाच्छादनभाजना
इतिकात्यायनोक्तेः सवर्णाःक्षेत्रजदत्तकादयइतिमिताक्षरा॥ कौस्तुभेतुदत्तपुत्रेयदाजातेकदाचित्त्वौरसोभवेत्पितुर्वित्तस्यसर्वस्यभवेतांसमभागिनौ॥ अविधानंविधानं
वायदिप्राप्नोतिनंदनः विवाहविधिभाजंतुनकुर्याद्धनभाजनं॥ तस्मिंजातेसुतेदत्तेनकृतेचविधानके॥ तत्सर्वंस्वयंवद्दत्तस्यसत्स्वामीपितुरंजसा॥ जातेष्वन्येषुपुत्रेषुज्ये
ष्ठपुत्रप्रतिग्रहात्॥ पिताचेद्विभजेद्वित्तंनैवासौज्येष्ठभागभवेदिति॥ प्रथमश्लोकःजातकर्मादिसंस्कृतदत्तकस्यौरसेनसमांशलाभपरः द्वितीयश्लोकस्ययदिप्रतिग्रहीत्राजात
९ कर्माद्युपनयनांतसंस्कारोनकृतःदत्तकविधानंतुकृतंतदातस्यविवाहमात्रलाभःनत्वन्यधनलाभइत्यर्थः॥ यदिप्रतिगृहीतस्यापिदत्तकविधानंनकृतंकिंतुजातकर्माद्युपनय
नांतसंस्कारमात्रंतदातस्यदत्तकत्वाभावादौरसस्येवसर्वधनलाभःनकेवलसंस्कृतस्येतितृतीयश्लोकार्थः एवंचयदाकृतिपर्येसंस्कारादत्तकविधानंचकृतंतदाचतुर्था
शलाभोद्रष्टव्यः चतुर्थश्लोकस्तुयदासमांशःक्रियतेतदातस्यज्येष्ठत्वेपिज्येष्ठांशनिषेधार्थइत्युक्तं॥ तन्मिताक्षरानादरेणनानादरणीयं॥ दत्तकपुत्रोस्वीकुर्वतांतुतस्याःप ।२७।
त्न्याभावधनग्रहणेधिकारोदुहितृत्वादितिशौनकःब्राह्मणानांसपिंडेषुकर्तव्यःपुत्रसंग्रहः तदभावेसपिंडोवाअन्यत्रतुनकारयेत्॥ क्षत्रियाणांस्वजातौवागुरुगोत्रसमो
पिवावैश्यानांवैश्यजातौचशूद्राणांशूद्रजातिषुसर्वेषांचैववर्णानांजातिष्वेवनचान्यतः दौहित्रोभागिनेयश्चशूद्रस्यापिचदीयनेनैकपुत्रेणकर्तव्यंपुत्रदानंकदाचनबहु
पुत्रेणकर्तव्यंपुत्रदानंप्रयत्नतः दाक्षिण्यंगुरवेदद्याद्यथाशक्तिद्विजोत्तमः नृपोराष्ट्रार्धमेवापिवैश्योवित्तशतत्रयं॥ शूद्रःसर्वस्वमेवापिअशक्तश्चेद्यथाबलमिति॥ ब्रा

लणानामितिसपिंडेष्वपिभ्रातृपुत्रोमुख्यः तदभावेसगोत्रः सन् सपिंडः यः कश्चित् तदभावे सगोत्रः सपिंडः तदभावेऽसपिंडः सगोत्रः तदभावे सपिंडः सन्नस
गोत्रइति॰ तत्रभ्रातृपुत्रस्यपुत्रीकरणंप्रपंचितंतदभावेसपिंडएवसगोत्रः स्वगोत्रेषुकृतायेसुदत्तक्रीतादयःसुताः विधिनागोत्रतांयातिनसपिंडत्वंविधीयतेइति॰ वृद्धगौतमः गोत्रतांस तातिवं॰
तदभावेकेवलसपिंडोपिमौनकेनतदभावएवासपिंडोक्तेः असपिंडेष्वपिसगोत्रोमुख्यः नसापिंड्यंविधीयतेइतिशेषबलेनासपिंडसगोत्रलाभात् तदभावे
असगोत्रः दत्ता अपितनयानिजगोत्रेणसंस्कृताः आयांतिपुत्रतांसम्यगन्यबीजसमुद्भवाइतिकालिकापुराणात् गोत्ररिक्थेजनयितुर्नभजेद्दत्रिमःसुतइति
मनुनाऽसगोत्रस्यध्वननात् च प्रयत्नतइतिआपदुद्धारार्थमित्यर्थः अत्रदत्तकपुत्रीस्वीकर्तृमतेभिन्नभिन्नगोत्रजातौपरस्परमसपिंडौकन्यापुत्रौयत्रपरस्परम
सपिंडाभ्यांएकगोत्राभ्यांप्रतिगृहीतौतत्रतयोः कन्यापुत्रयोःपरस्परंविवाहोनजायतेएकगोत्रत्वादितिकेचित् अन्येतुतयोर्विवाहोभवति॰ एकगोत्रसंबंधमा
त्रस्याविवाहप्रयोजकत्वाभावात् किंतुएकगोत्रजन्यत्वस्यासमानार्षगोत्रजामित्युक्तेः अन्यथाअसमानार्षगोत्रामित्येवब्रूयात् तेनतस्यामातापितृगोत्रोद्भू
तोनिषिध्यतेनत्वेषइति॰ एवंमाध्यंदिनीयानाममात्रगोत्रप्रभवामितिप्रभवपदप्रयोजनमूह्यमित्याहुः राष्ट्रार्धमितिअर्धराज्योसन्नमित्यर्थः तस्यएकव
28 र्षीयं॰ यद्वर्षेपुत्रः गृहीतः तद्वर्षीयमितियावत् प्रदद्यादर्धराज्योइत्येकवर्षात् तंधनमितिवृद्धगौतमोक्तेः यस्यक्षत्रियस्ययत्रस्वाम्यंतत्तद्राज्यंतेनएकग्रा
माधिपक्षत्रियादिनैकग्रामाधर्म [illegible] उत्तमादिव्यवस्थयेति वृद्धगौतमस्य

रणंद्रव्यं·सर्वस्वमिति·एकवर्षीयभक्तिलभ्यंद्रव्यंएकवर्षाहृतंधनमित्युः·सर्वस्वंचान्वयेसतीतिनिषेधाच्च·यथाबलमितिएकवर्षभक्तिद्रव्ये
यावद्दातुंशक्यंततःकिंचिदधिकंदद्यादित्यर्थः·दत्तकपुत्रपुत्रमरणेतस्मात्प्रतिगृहीतृतत्पत्नीतत्पुत्रांतरादीनांसर्वेषांसापिंड्याद्दशाहाशौचं
पालकमरणेदत्तकादेर्दशाहंसपिंडसगोत्रत्वात्॰जनकमरणेतुनदशाहमित्याद्यग्रेबोध्यंदौहित्रोभागिनेयश्चशूद्रस्यापिचदीयतेइ
ति·अत्रोक्तंकौस्तुभेशौनकः·दौहित्रोभागिनेयश्चशूद्राणांचेतःसुतः·ब्राह्मणादित्रयेनास्तिभागिनेयःसुतःक्वचिदिति·पूर्वार्धे १६
भागिनेयस्यदौहित्रसाहचर्यादुत्तरार्धेभागिनेयपदंदौहित्रोपलक्षणं·पुत्रत्वबुध्यनर्हभ्रातृपितृव्यमातुलाद्युपलक्षणंचेति·अ
न्येत्वाहुः·अपेःअवधारणमर्थः·तथाच·जातित्वेनदौहित्रभागिनेयावुद्दिश्यशूद्रकर्तृकतानियमविधानादन्येषांतत्पुत्रनि
षेधःफलति·नचतत्रचकारादन्येषामपिसमुच्चयःकुतोनभवति·एवंचतत्रापेरवधारणार्थकत्वमपिनकल्प्यतेइतिवाच्यंतथा
सतिएतद्वाक्यवैयर्थ्यापत्तेः·सर्वेषामेवजातित्वेनतदुभयप्राप्तेरिति·ननुएतस्यांदानक्रियायांदौहित्रभागिनेयकर्मकत्वशू
द्रकर्तृकत्वयोर्विधानेवाक्यभेदः·नचतदुभयविशिष्टैकदानविधानान्नवाक्यभेदः·विशिष्टविधानेवाक्यभेदवि
रहादितिवाच्यं·मातापितावेतिदर्शनेनापन्निवृत्तिरूपदृष्टप्रयोजनवत्त्वेनविशिष्टदानविधानासंभवात्·दानभा २८

वनायाभाव्यसाकांक्षनयाश्रुतस्यशूद्रस्यैवभाव्यत्वेनान्वयसंभवेनाश्रुतस्यतादृशप्रयोजनस्यान्वयासंभवाच्च॰ तस्मा
द्दौहित्रभागिनेयौशूद्रायदद्यादित्यर्थः ततश्चशूद्रकर्मकदानोद्देशेनदौहित्रभागिनेयौनियम्येतेशूद्रस्यद्वावेवदत्तपु
त्रौनान्यइति॰ ब्राह्मणादीनांतुसर्वेपीति॰ नचशूद्रस्यस्वतःसिद्धत्वेनकुतोदानभाव्यत्वमितिवाच्यं॰ व्रीहीनवहंती
त्यत्रव्रीहीणांस्वरूपेणाभाव्यत्वेपिसंस्कारवत्तयावहननभाव्यत्ववच्छूद्रस्यस्वरूपेणदानाभाव्यत्वेपिपितृत्वरू
पसंस्कारवत्तयातद्भाव्यत्वादितिचेन्न॰ दीयतइतिहिकर्मणियक्कर्मत्वेनचदौहित्रभागिनेययोःप्रतीत्यात
योरेवभाव्यत्वंलभ्यतेततःश्चशूद्रसंबंधिदानेनदौहित्रंभागिनेयंचपुत्रंकुर्यादित्यर्थःतथाचप्रोक्तरीत्याक
त्नियमात् ब्राह्मणादेःतन्निषेधेपर्यवसानं॰ पठंतिचब्राह्मणादित्रयेनास्तिभागिनेयःसुतःक्वचित्दौ
हित्रोभागिनेयश्चशूद्रैस्तुक्रियतेसुतइतिवृद्धगौतमवचनंसगोत्रजसुतालाभेपालयेदन्यगोत्रजं
॥दौहित्रंभागिनेयंवामातृपक्षस्यसुतंविनेतिशाकलसंहितावचनंचेति॰ अन्येतुदौहित्रभागिनेययोः

शूद्रपरत्वपुत्तरे वाधिकारः दौहित्रभागिनेयं च शूद्राणां च पतिर्यद्दीति वचनात् शेषं प्राग्वदित्याहुः भ
द्रास्तु शूद्रस्यैव दौहित्रभागिनेयौ द्वौ नेतरस्येति न नियमः यथा दंडी प्रैषानन्वाहेति दंडित्वेन प्रैषानु
वचने मैत्रावरुणस्य विनियोगात् प्रैषानुवचनकर्तृत्वेन भाव्युपयोगिनो मैत्रावरुणस्यैव मै
त्रावरुणाय दंडं प्रयच्छतीत्यत्र दंडितया भाव्यत्वं यजमानः स्वदंडदाने न मैत्रावरुणं भावयेदि
त्यर्थात् तथाप्यनेयो द्वैहोकृतर्णत्वेन चतुर्थ्यर्थषष्ठ्या दौहित्रभागिनेयदानेन शूद्रं भावयेदित्य
र्थः एवं च दौहित्रभागिनेययो विधेयत्वेन नियमविधिविषयत्वं युक्तं शूद्रस्य तु शेषितया
तन्नियमे परिसंख्यापत्तेः यथा इमामगृभ्णन्रशनाम् तस्येत्यश्वाभिधानीमादत्ते इति सा च त्रि
दोषेति तस्माद्दौहित्रभागिनेयावेव शूद्रस्य मुख्यौ तदभावे तु अन्येपि सजातीयः शूद्राणां शूद्रजातिषितितेनैवोक्तेः २९
न चेदं जातिपदं दौहित्रभागिनेययो रूपसं ह्रियते इति वाच्यं तथासत्येकस्मिन्तौ सामान्यवाक्यवैयर्थ्यापत्तेः एवं च ब्राह्मणादिभिरपि दौहि
त्रभागिनेयौ ग्राह्यौ बाधकाभावादिति वदंति॥

पितुर्गोत्रेणेति॰ आचूडांतं संस्कृतः इत्यन्वयो॰। विविधाबाड्॰ सपुत्रोन्यतोन्यस्य ब्राह्मणादेः पुत्रतां नयातीति निषिध्यते अत्र प्रतिग्रहीतुरेव जात
कर्मादि विधानात् ज्ञानमात्र प्रतिग्रहीतुरत्यः इत्यपाचूडांतमित्युक्तेश्च॰ पंचवर्षांतं गौणः॰ ऊर्ध्वं तु पंचमाद्वर्षादित्युक्तेः॰ गृहीत्वेति॰ पुत्रेष्टिस्तस्य दासभा
वापत्तापिका॰ एतच्च विप्रादेरपि॰ ऊर्ध्वं तु पंचमाद्वर्षात् दत्ताद्याः सुतान्नृपेति सामान्यतो निषेधादिति यथाश्रुतानुरोधिनः तदसत्॰ उक्तकालिकापु
राणस्य राज्याहिपुत्रपरत्वात्॰ तस्यैव च प्रतिग्रहीतृकर्तृकसंस्कार आवश्यकः॰ एवं हि कालिकापुराणे॰ नक्षेत्रजादितनयं राजा राज्येभिषेचयेत्॰ पित्र
र्णशो धने नित्यसमोसे तन्नयेसति॰ असतीति शेषः॥ औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च॰ गूढोत्पन्नोपविद्धश्च भागार्हास्तनयास्त्विमे॰ कानीनश्च स
होढश्च क्रीतः पौनर्भवस्तथा॰ स्वयंदत्तश्च दासश्च षडेते पुत्रपांसनाः॰ अलाभे पूर्वपूर्वेषां परान्सम्यनियोजयेत्॰ पौनर्भवं स्वयंदत्तं दासं राज्ये नयो
जयेत्॰ दत्ताद्या अपि तनया निजगोत्रेण संस्कृताः॰ आयांति पुत्रतां सम्यगन्यबीजसमुद्भवाः॥ पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते॰ आचूडांतं न पुत्रः
स पुत्रतां याति चान्यतः॥ चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः॥ दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते॰ ऊर्ध्वं तु पंचमाद्वर्षान्न दत्ताद्याः सुतान्नृप॰
गृहीत्वा पंचवर्षीयं पुत्रेष्टिं प्रथमं चरेत्॰ पौनर्भवं तु तनयं जातमात्रं समानयेत्॰ कृत्वा पौनर्भवस्तोमं जातमात्रं तु तस्य वै॰ सर्वांस्तु कुर्यात्संस्कारान्
जातकर्मादिकान्नृप॥ कृते पौनर्भवस्तोमे सुतः पौनर्भवस्ततः॥ एकोद्दिष्टं पितुः कुर्यान्न श्राद्धं पार्वणादिकं॥ क्रीताद्यास्त्विनामौल्येः सोपि दास इति निगद्यते
इति॰ अस्यार्थः॥ दत्ताद्या इति॰ दत्ताद्याः पुत्राः प्रतिग्रहीतृकर्तृकजातकर्मादिसकलसंस्कारसंस्कृताएव राज्यार्हा नान्ये सम्यक् पुत्रतां राज्यार्हतां मिथ
र्णात्॰ अन्यथा पुत्रतामायांतीत्येवं ब्रूयात्॰ न तु सम्यगित्यपि॰ अन्यथा दास उच्यते इत्यत्रापि अन्यथाग्रहीतृकर्तृकचूडांतसंस्काराभावे दास स्त
द्वद्राज्यभागानर्हः॥ अन्यत्र अन्यथा प्रयोगस्य मासमग्निहोत्रं जुहोतीति वृत्तकर्माति देशार्थत्वात्॰ एवमेव दासं राज्ये न योजयेदिति स्वयमभिधा
य दत्तकराज्याधिकारं प्रकृत्यान्यथा दास उच्यते इत्येन तस्य संगतेरिति॰ पौनर्भवस्तोमः सोमयागप्रभेदः॰ तस्य सुतसंस्कारार्थत्वं अनाहिता
ग्नीनां तु तादृशयागासंभवे पितृदेवताकचरुर्द्रष्टव्यः॰ ब्राह्मणादेस्तु नजन्मतः प्रतिग्रहे विकारः॥ सदृशं तु प्रकुर्याद्यं गुणदोषविचक्षणं॰
पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयः कृत्रिमः सुतः [illegible] बालमिति मिथ्याति पिविरोधात्॰

३०

श्राद्धाकरणे दोषः। तत्करणे गुण इति गुणदोषावधारणकुशलमिति सर्वज्ञनारायणविरोधात्। स्वदत्तं तु त्वं इमं पुत्रं करोमीति एकस्य पुत्रत्वाचिकीर्षात
दन्यस्याहमस्य पुत्रो भवामीति तद्बुभूषया प्रतिग्रहीतृसाद्गुण्यवत्तं। सकामं यं कुर्यादिति बौधायनसंवादात्। अहमस्य पुत्रो भवामीति मतिश्चेन
जातमात्रादावितरत्राकरविरोधाच्च। तस्मात्संचाधिकवर्षएव प्रतिग्रहार्ह इत्येके। अन्ये तु एतत्सर्वं असगोत्रदत्तकपरमित्याहुः। परं तु अस
गोत्रोपि उपनयनान्तसंस्कारोत्तरमपि परिणीतोपि उत्पन्नपुत्रोपि च दत्तकोऽभवतीति बाधकाभावात्। शुनःशेपो विश्वामित्रपुत्रः स्वकर्मेवाभवदिति ब्रह्म
चब्राह्मणसंवादाच्च। शुनःशेपस्योपनीतः अनुपनीतस्य वेदाध्ययनासंभवेन वैदिकमंत्रैः प्रजापत्यादिस्तुतावितिरत्नहिरण्मयपरप्रतिग्रहे
चमृत्यसन्तुपपत्तेः। न च स्वयंदत्तइति वाच्यं। दत्ताद्यास्तनया इत्यत्राद्यपदेन कृत्रिमादीनामपि ग्रहणेन भवन्मतेतत्स्यापि निषेधात्। न च श्रुतिवशा
ज्जातोपनयनः स्वयंदत्तएव स्वीकार्य इति वाच्यं। तर्हि जातोपनयनस्य दत्तकस्यापि दुर्वारत्वात्। श्रुत्या दत्ताद्या इत्यस्याप्रामाण्योपपन्नात्। पि
तृगोत्रेण साद्भ्यप्रायशः। कालिकापुराणादावदर्शनाच्च। अथवा दत्ताद्या इत्यस्य प्रामाण्यं परंतु अन्यबीजसमुद्भवा इतिपद्यश्रुतत्र्यर्थ इत्ता
द्यास्तनयाः संस्कृताः कृत्रिमादिविधानाः निजगोत्रेणैव पुत्रतां लभ्य कुर्यांति प्राप्नुवंति। दत्रिमसंस्कारवर्जन पितृगोत्रसागस्य मनुनोक्तेः। एवं पितृ
गोत्रेण साधुएवं स्तु। परंतु न पुत्रः स पुत्रतां याति चान्यतर इत्यस्य अन्यस्य पितृभिन्नस्य प्रतिग्रहीतुः पितृगोत्रेण पुत्रतां न याति किंतु पितृगोत्रे विहा
येव पुत्रतां यातीत्यर्थः। चूडेति। अन्यथा दास इत्येतरतिचतुर्थपादवशात् निजगोत्रेण प्रतिग्रहीतृगोत्रेण अन्यथा दातृगोत्रेण वा चूडादिसंस्का
राः कृताश्चेत् न दाते तनयाः दत्ताद्याभवंतिते षां अदासता दासभिन्नता उच्यते इत्यर्थः। उर्ध्वं त्विति। एतच्च यथाश्रुतमलग्नकं गृहीता पंचवर्षीय
मित्येनेनविरोधात्। किंतु नहि निंदान्यायेन पंचवर्षप्रतिग्रहस्तावकं। तत्र प्रथमं पुत्रेष्टिः कार्या। तत [illegible] गोत्रेणोपनयनपर्यंतसंस्कारान् सं २०
जातत्वात्। पुत्रपूर्वत्वार्थापूर्वेष्टिः पालकेन विहितकर्मांतरत्वनुष्ठानाकाश्रमंकार्या इत्यर्थः। यच्चान्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः स्वगोत्रेण
स्वशाखोक्तविधिना स स्वशाखाभागिति वाक्यं तन्मतिवेदमुपनयनपरमिति केचित्तु दत्ताद्या इत्यादिपंचकवचनानि द्व्यामुष्यायणपराणि। तथा
हि। दत्ताद्या इति। अन्यबीजसमुद्भवा अपि दत्ताद्यास्तनयाः प्रतिग्रहीत्रा स्वगोत्रेण संस्कृताएव कृत्तजातकर्मादिसंस्काराएव प्रतिग्रही

तुः सम्यक्पुत्रत्वमित्यर्थः। ऊर्ध्वमिति संस्कारैः यः संस्कृतो ... कार्य इत्यर्थः। यथा चूडादिकर्म समानगोत्रत्वं ...
तत्रिपितृगोत्रत्वं प्राप्नुवंतीत्यर्थः द्व्यामुष्यायण एकगोत्रः स इति भावः· पितुर्गोत्रेणेति· आचूडांतं जनकगोत्रेण यः संस्कृतः सोन्यस्मै दत्तपुत्रतां न याति किं
तु द्व्यामुष्यायणो द्विगोत्र इत्यर्थः· चूडेति· चूडातः प्राक्तनाः संस्काराश्चेत् पितृगोत्रेण जातास्तदा चूडाप्रभृति निजगोत्रेण कृता एवं चेत्तदा द्व्याघाः स्तनया भवंति·
द्व्यामुष्यायणा अप्येकगोत्रा इति भावः। चूडायां निजगोत्रानुष्ठानस्यैकगोत्रत्वापादकत्वात्· चूडायां तत्तद्गोत्रिणां प्रसार्षेयशिखाकरणोक्तेः। अन्यथा द्व्यसततादृसर्वेलक्षण्य
मात्रमुच्यते· एतत्सकलस्य स्पष्टमाहितत्वात्· ननु पुत्रत्वमित्यर्थः· ऊर्ध्वमिति· तावत्कैः संस्कारैः प्रथमं पुत्रेष्टिकार्येत्यर्थः· यथा च प्रतिग्रहीतृगोत्रेण चूडाकर्म समानगोत्रत्वप्राप
कं तद्यथा तद्गोत्रेण तद्वा स्वोक्तविधिनोपनयनेन तत्समानशाखीयत्वप्रापकमिति हाहा न्यशाखोद्भवो दत्त इतीत्याहुः· परंतु एतेषां द्व्यामुष्यायणपरत्वेपि न केवलदत्तके विरोध
इति दिव्· वस्तुतस्तु दत्तको द्विविधः केवलो द्व्यामुष्यायणश्च· तत्र संविदं विना दत्त आद्यः· अनयोरसावित्रीसंविदाहतो· सः· तत्र दत्तकस्य होमसाध्या हृष्टविशेषरूप
तायाउपपादितत्वात्तादृशादृष्टवशादेव प्रतिग्रहीतृकुले पुत्रपित्रादिसंबंधविशेषप्रयुक्तानि कार्याणि भवंति· गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः· गो
त्ररिक्थानुगः पिंडो व्यपैति ददतः स्वधेति मनुना दत्तकस्य जनकगोत्ररिक्थनिराकरणपुत्रं दत्तो जनकस्य गोत्ररिक्थे अनुगच्छतीति गोत्ररिक्थानुगः पिंडः
सापिंड्यं स्वधा श्राद्धौर्ध्वदेहिकादि च व्यपैतीति गोत्रादिसंबंधश्राद्धादिसंबंधं न दद्यात्स्वेच श्राद्धस्य भावइत्यन्वयव्यतिरेकाभ्यां जनकश्राद्धादावधिकारनिराकर
णात्· वस्तुतस्तु यथा जातपुत्रः कस्य कोपि विनाहर्धीनेसाहेवमोवस्था विशेषः यथा वार्धमंतर्वेदि भिन्नेति अर्धं बहिर्वेदि भिन्नेतीत्याहुः संधिरेखाः लक्ष्येतत
दत्तः गोत्ररिक्थपिंडस्वधाशब्दैः जनकादिसंबंधप्रयुक्तकार्यमात्रं लक्ष्यते· व्यपैतीत्यनेन च तन्निवृत्तेरभिधानात् सोदरपितृव्यादिसंबंधमपि न निरपि
क्षिप्यति· तथा च केवलदत्तकस्य प्रतिग्रहीतुरेवौर्ध्वदेहिकश्राद्धाद्यधिकारः· न तु जनकस्य पितुः सपिंडीकरणपार्वणश्राद्धादि प्रतिग्रहीत्रे वत्सह
कुर्यात्· एवं तत्पुत्रोपि उभयोः पुत्राभावे सत्यनापत्यसपिंडांतरवत् पूर्वं पितुरपि और्ध्वदेहिकादि कार्यं· यत्तु केवलदत्तकेनानाभावः· तद्विधानादिति
तन्न· केवलदत्तकस्य कस्य चिदपि कश्चिदपि व्यवहाराभावेपि प्रोक्तमनुना जनकादिसंबंधनिवृत्तेरभिधानात् द्व्यामुष्यायणे च तद्बाधादेव द्वयोरिता
31 तद्व्यर्धं समानोचितत्वं बंधुभ्यः· बीजिनश्च मातृबंधुभ्यः पंचमादिति गौतमकृतो बीजिकुले सप्त[…]विवाहनिषेधो द्व्यामुष्यायणसापिंड्यहृत्वेनापि घटते·
तदितिद्व्यर्धं तस्य जनकसापिंड्याभावेन विवाह[…]संभवात्· किं च· द्व्यामुष्यायणमात्रे[…]तत्रीता दयः सुताः· गोत्रद्वयेप्यनुद्वाह्याः शौंगशैशिरयोर्य

ष्येतिवचनेन द्व्यामुष्यायणस्य गोत्रद्वयं मनुना च पितृगोत्रनिवृत्तिरिति विरोधस्य परिहारार्थं सोपि स्वीकार्यः एवमेव शूरसेनेन कुंतिभोजाय केवलदत्रिमत्वे
न दत्तायाः कुंत्याः पुत्रस्य अर्जुनस्य शूरपुत्रवसुदेवदुहित्रा सुभद्रया सापिंड्यनिवृत्तिरुक्ता भद्रसोमेश्वरेण सापि च केवलदत्तकास्वीकारे कथं संगच्छते इति
अस्य च केवलदत्तकस्य पालकपितृकुले एव साप्तपौरुषं पालपितृमातृकुले एव च पांचपौरुषं सापिंड्यं दर्शितं गौतमवचनात् मनुना जनककुले तन्निवृत्तेरुक्त
त्वाच्च मनुजनकगोत्रेणोपनयनादिसंस्कृतस्य जनककुले पितृतः साप्तपौरुषं मातृतश्च पांचपौरुषं सापिंड्यं प्रतिग्रहीतृकुले तु त्रिपुरुषं प्रतीयते नहीतरि गो
ण पितृत्वप्रयोजकस्योत्पादकत्वस्योपनेतृत्वस्य चाभावात् जनकगोत्रेण संस्कृतस्य तु प्रतिग्रहित्रादिभिरेव साप्तपौरुषं पांचपौरुषे च सापिंड्यमिति सा
पिंड्यमीमांसामतं तद्दूषकारण एवाग्रे दूषयिष्यति द्व्यामुष्यायणस्य श्राद्धेधिकारो ग्रंथे एव व्यक्तीभविष्यति अन्ये तु दत्तको द्विविधः केवलो द्व्यामुष्यायणश्च
तत्र केवलः प्रतिग्रहीतुरेव पुत्रः संपादितप्रतिग्रहीतृगोत्रसापिंड्यादिः सन्निवृत्तजनकगोत्रसापिंड्यादिः व्याप्यपुत्रत्वविधायकवचनैरेव व्यापकगोत्र
सापिंड्यादिसिद्धेः गोत्ररिक्थे जनयितुरिति वाक्याच्च अत्र पिंडः सापिंड्यं ननु श्राद्धं दत्तः स्वधेत्यनेन पौनरुक्त्यापत्तेः न च प्रतिग्रहीतृसंस्कारेण तद्गो
त्रादिसंबंधसिद्धावपि जनकगोत्रस्य तज्जन्यसंस्कारस्य च सत्त्वात्कथं तन्निवृत्तिरिति वाच्यं निरुपाधिकदानादेव तन्निवृत्तेर्मनोरभिप्रेतत्वात् अत एव तस्य प्र
तिग्रहीतृगोत्रेणैव सर्वक्रियानुष्ठानं प्रतिग्रहीतृसपिंडा एव तज्जननादौ दशाहाद्याशौचं प्रतिग्रहीतृकुल एव च तत्सपिंडीकरणादि कुर्वंति न चास्य ज
नकगोत्रसापिंड्याद्यभावे जनकसगोत्रा सपिंडा विवाहप्रसंग इति वाच्यं असगोत्रा च या पितुरिति निषेधात् च कारेण सपिंडाग्रहणात् ये आमुष्यायणा ये च द
त्तकक्रीतकादयः गोत्रद्वयेप्यनुद्वाह्याः शौंगशैशिरयोर्यथेति संग्रहाच्च न चैवं तत्सुतस्य दत्तकजनककन्याया विवाहः स्यादिति वाच्यं तस्याः पितृष्वसृत्वात् पितुः स्व
सारं मातुश्च मातुलानीं स्नुषामपि मातुः सपत्नीं भगिनीमाचार्यतनयां तथा आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पग इति मात्स्यवचोक्तेः ॥ तस्मात्तत्सुतस्य च जनकपौ
त्र्या विवाहो भवत्येव बाधकाभावात् दत्तकानंतरं औरसे जाते तु समरिक्थं गृह्णीयात् दत्तपुत्रे यदा जाते कदाचित्स्यादौरसो भवेत् पितुर्वित्तस्य सर्वस्य भवेतां समभा ३९
गिनौ इति वचनात् आवयोरयमिति संविदा दत्तस्तु द्व्यामुष्यायणः एकपिंडो द्वावनुकीर्त्तयेत् प्रतिग्रहीतारं चोत्पादयितारं चेति वचनात् न च संविदि मानाभावः।
तथैवाक्षेत्रिणो बीजं परक्षेत्रप्रवापिणः कुर्वंति क्षेत्रिणामर्थं न बीजी लभते फलं क्रियाभ्युपगमात्त्वेतद्बीजार्थं यत्प्रदीयते तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव चेति
मनुवाक्यस्यैव संविदि प्रमाणत्वात् यत्रापि संभावितसंविदयोरिति संविदा परक्षेत्रं क्षेत्रस्वामिना बीजवापार्थं दीयते तत्रोत्पन्नस्यापत्यस्य द्वावपि पितरौ भागिनौ

32

विसर्गात् । न चास्त्वयं क्षेत्रजादेर्द्व्यामुष्यायणत्वप्रयोजकोऽभिसंधिः दत्तकेतु तत्त्वे मानाभाव इति वाच्यं । एकवस्तुनि लोकतएवाभिसंधिनोभयस्वामिकत्वसिद्धेः ।
नच दत्तः पुत्रांतरसत्त्वे संवादोस्त्यर्थः । एकपुत्रस्य तु न त्वेकं पुत्रं दद्यादिति वसिष्ठेन निषेध एवेति वाच्यं । प्रीत्यतिशयेनानेकपुत्रस्यैव संवादसंभवात् । एवं यः कृतोपनयनो
दत्तः प्रतिगृहीत्रा कृतविवाहादिः तत्र प्रतिगृहीतृगोत्रसंबंधे जाते पि न जनकगोत्रसंबंधनिवृत्तिः । अन्यथा त्वेदृशो दत्तः पुत्रश्चेद्वो पुनापितः । स्वगोत्रेण स्वगृ
ह्योक्तविधिना सस्वशाखभागीति वसिष्ठेनोपनयनोत्तरं गृहीतस्य शाखाद्वयभागित्वोक्तेर्गोत्रद्वयभागित्वस्याप्यौचित्यात् । स्वगोत्रेणेति सहार्थे तृतीया सत्ता॰कं । अयं
मपि द्व्यामुष्यायणः द्व्यामुष्यायणत्वं हि तत्प्रकारकद्व्यगोत्रद्वयभागित्वं । एतेन चूडाप्राक्तनसंस्कारानंतरं दत्ते प्रतिगृहीत्रा चूडायां कृतायां द्व्यामुष्यायणत्वं प्रसुक्तं ।
वसिष्ठेन शाखाद्वयभागित्वोक्तेस्तस्य जनककृतोपनयन एवाभावात् । यत्तु दत्तो द्व्याप्यपि । तत्र यत् इति कालिकापुराणे तद्भावे पूर्वं पूर्वेषां पराद्वस्मभिषेचयेदिति
पूर्वपक्षमाहुः नेकुदत्तकसमवाये राज्याधिकारयोग्यतातारतम्यबोधकं । अन्यथा गृहीत्वा पंचवर्षीयमिति कृतचूडस्यापि परिग्रहार्थकवाक्यविरोधात् । ए
वं यः सोपाधिकदानेन दत्तः प्रतिगृहीत्रा जातकर्मादिभिः संस्कृतः सोपि द्व्यामुष्यायणः निरुपाधिकदानाभावेन स्वगोत्रनिवृत्त्यभावात् । एवं च केवलदत्तकस्य जनककुले सा
पिंड्याभावेपि द्व्यामुष्यायणस्य सर्वस्यापि तत्संततेश्च गोत्रद्वयेपि अविवाहः गोत्रद्वयसंबंधात् कुलद्वयेपि त्रिपुरुषसापिंड्यात् अतएव श्राद्धं कुर्यात् । एकश्राद्धे वापि तत्तु द्विस
एकपिंडे द्वावनुकीर्तयेत् प्रतिगृहीतारं चोत्पादयितारं चातृतीयात्पुरुषादिति वचनात् । दत्तकानां तु पुत्राणां सापिंड्यं स्यात्रिपूरुषं । जनकस्य कुले तद्वद्गृहीतुरिति धा
रणोक्तिरेतद्विषयकसंग्रहोक्तेश्च । एतन्मते शुद्धदत्तपुत्रस्य जनकगोत्रे विवाहो न कार्यः । नच गोत्ररिक्थे जनकपितुर्न भजेद्दत्रिमः सुतः इत्यनेन जनकगोत्रनिवृ
त्तिरुक्तैवेति वाच्यं । असपिंडा च या मातुरसगोत्रा च या पितुरिति तदुद्वाहनिषेधादिति तल्लिखितं द्विकाप्यनुकूलेव । यत्तु इदं मे पेशलमेव । संदिग्धानुभयोरिति द्व्यामु
ष्यायणदत्तकादिगोत्रसान्निध्याद्धि संमतः । तत्र जनकगोत्रानिवृत्तेर्गोत्रद्वयेपि विवाहः । नच केवलदत्तपुत्रस्य असपिंडा च या मातुरसगोत्रा च या पितुरिति मनूक्तेस्तथा ।
दरस्य पितुर्मातुर्वाऽसपिंडा असगोत्रा चेति न तदर्थः । मातृपितृद्वारकसापिंड्यशून्या वरस्यासगोत्रा चेति । असमानार्षगोत्रजामिति याज्ञवल्क्यैकवाक्य
त्वात् एकस्मृतकल्पनालाघवात् । तथा च केवलदत्तकस्य जनकगोत्रेण विवाहे बाधकाभाव इति तत्स्फुटतरं । मनुनाऽसगोत्रा च मनवादिति विहायासगोत्रा च ॰स्या
या पितुरित्येवाभिधानविरोधात् । असपिंडा च या मातुः पितुश्च वरस्यासगोत्रेत्यन्वयासंभवाच्च । अभोज्यान्नमहाश्वस्य अभेद्यावाद्विपस्य चेत्यादौ अन्वगत्
योरभोज्यावालस्याभेद्याचेत्यन्वये सिद्धांतविरोधादित्याहुः । अयं तु विशेषः । एतन्मते पूर्वसिद्धांतसंवादः प्रायशोस्त्येव । परंतु शुद्धदत्तकस्योभयकुल
साप्तपौरुषं सापिंड्यमिति कौस्तुभकृतां गंधकृतां च सप्तरेः । शुद्धरभद्दप्रभृतीनां तु गृहीतुः कुले साप्तपौरुषं सापिंड्यं जनककुले च तदभावेपि साप्तपौ

ह्यमविवाहइतिविशेषः। प्रांचस्तु भट्टसोमेश्वरादिभिरनेके कृत्रिमां पुत्रीं मन्यते अंगराजाय लोमपादाय दशरथेन शांतानाम्नी कन्या दत्ता अपरं राजा दशरथः स
स्वामेदमितः स्क हत अपसार्थमानेन दत्तेयं वरवर्णिनी याचमानस्य मे ब्रह्मन् शांताप्रियतरा मम सोयं ते श्वशुरो वीरः पिता वा हंत धान पइसादि रामायणोक्त
श्वभं गं प्रतिलोमपादवाक्यात् क्रीतावृत्सादेः आलीकसस्यवर्णनपरकीयानुकंपका। धर्म्येण विधिना दानमसगोत्रेपि युज्यते कृत्रिमा च हरिवंशे पृथां दुहित
रं चक्रे कुंतिस्तां पांडुरावहदिति अत्र वसुदेवभगिनीं पृथां कुंतिर्दुहितरं चक्रे इति चक्रेपदोक्तेः तस्याः कृत्रिमत्वं अपविद्धादिपर्वणि शकुंतलोपाख्याने जनया
मास स मुनिर्मेनका मां शकुंतलां प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीं जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु कृतकार्या ततस्तूर्णमगच्छच्छक्रसंसद
मित्याद्युक्त्वा उपस्पृष्टुं गतश्चाहमपश्यं शयितामिमां निर्जने विपिने रम्ये शकुंतैः परिवारितां आनयित्वा ततश्चैनां दुहितृत्वे न्यवेशयमित्यभिधानादित्याहुः
तं ध्वक्तान्येतत्सर्वं समतमेव अत्र सूत्रेयोरत्रिमः सुतइत्यत्र कृतपदोपादानात् कन्या न कृत्रिमा भवितुमर्हति न च तत्र सुतशब्दस्य नपुंसकोत्तरापत्यमर्थः लक्षणा
पत्तेः नापि कन्यायास्तथात्वं वदतां मते पिप्पलीतः प्राक् पिंडदानरिक्थदानयोरधिकारः तस्मात् रोपाख्यानिकरीत्यनुरोधेन कन्यासु विधिप्रवृत्त्यंगीकारे मानाभावः
उपाख्यानोक्तास्त्वेव कन्यासु शौनकवसिष्ठाद्यनुक्तरोक्तविधिर्जातइत्यत्रापि मानाभावादिति भट्टानामभिप्रायः प्रीतिसंयुक्तमित्युक्तं स्पष्टयति पंचमो ध्वंमिति
खं१ माजेषत संवध्रीयान्न दद्यादित्यर्थः सर्वस्वदाने विश्वजिति सर्वं ददातीत्यादेः मीमांसाविरोधमाशंक्य निराकरोति यच्चेति पुत्रादीनामिति सर्वस्वशब्देस्व
शब्दो ज्ञातिवचनः तथा च पुत्रत्वेन ज्ञातित्वात्तद्दानापत्तिरिति शंकार्थः निराकरणहेतुमाह जन्येति पुत्रत्वं जन्यपुंस्त्वं तच्च दानेन नोत्पद्यते तस्य प्रागेव सिद्धत्वादित्यर्थः
दासत्वेन दाने बीजमाह तस्मादिति सर्वस्वशब्दस्य पदेर्दर्शस्वत्वार्थकमिति भावः पुत्रदानाभावे कुतो दिशी जातं तरमुक्तं तदुपन्यस्य दूषयति पुत्रेइति शुनःशेपेति
बहुच ब्राह्मणे कथाप्रसिद्धिः तत्र शुनःशेप विक्रियोक्तिर्विश्वामित्रपुत्रत्वेन स्वत्वानुविरुध्यते दासेति दासत्वेन क्रयविक्रयव्यवहारैः शुनःशेपेन युज्यते दासत्वे
स्यैवाभावादित्यर्थः। दत्तकसामान्यनिषेधमाशंक्य निराकरोति योहीति अरणः अप्राणः अपगतो दत्तकसंबंधः अन्यकुलजः पश्चात् योग्यः अन्येनोढोदिता द्रजसोजा
तः अनेन क्षेत्रजो लब्धः अथवा न्यजायोदरसंभृतः पुःस्त्रीयायां जायायां जातः स स्वीये एव दोदरे जातः अपोनाएष आत्मनो यस्य लीतिश्रुतेः सुखोवः सुखशेवं सुखंप
स्माद्यतः हितैषी तथापि न हि गृभाय ग्रहणाय योग्यः किंच मनसा न मंतव्याउ मनसापि ममायं पुत्र इति न मंतव्य इत्यर्थः। ननु श्रौतलिंगसंस्कारानंतरमपि दत्तकसाध्यमेदि
ति तत्राह इदं चेति तथाच श्रौतं लिंगं क्रीतस्वयंदत्तं च संस्कारानंतरं साधयति ननु दत्तकत्वं शेलिंगाभावादिति भावः एतच्च यथाश्रुताभिप्रायेण यथेष्टविनियोगयोग्यत्व ३२
मिति अत्र निष्कर्षानुसारिणः स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं विजितं क्षत्रियस्य निर्विष्टं वैश्यशूद्रयोरिति गौतमसूत्रादेलो

कसिद्धकारणानुवादत्वं दत्तां विक्रीणेऽश्वादीनामयमाशयः स्वत्वमतिशयविशेषः तत्कारणानां क्रयप्रतिग्रहादीनां लोकव्यवहारादेव न शास्त्रात् तमविदुषामपि तद्दर्शनात् अतएव संविभागेन समुद्धितद्रव्यगतस्यापि पूर्वस्वत्वस्य नाशः स्वत्वांतरोत्पत्तिश्च प्रांचः पूर्वस्वत्वनाशस्वत्वांतरोत्पत्तिकल्पने गौरवात् पूर्वस्वत्वमेव संविभागेन तत्तद्विष्ठतया ज्ञाप्यत इति नव्याः अतएव क्षत्रियस्य विजयेऽपि जितस्य स्वत्वग्रहात् स्वत्वं स्थितं तत्रैव जेतुरपि स्वत्वं जितस्य करग्राहित्वात्तु जेतुरपि तन्मात्रं न तु स्वत्वं लोके तथैव कार्यकारणभावात् तादृशस्वत्वाभावादेव च सार्वभौमेन संपूर्णापि पृथिवी न देया माण्डलिकेन तु संपूर्णमण्डलं न देयमिति षाष्ठसिद्धान्तः संगच्छते तत्तद्ग्रामक्षेत्रादौ स्वत्वं तु तत्तद्भौमिकानामेव राज्ञां तु करग्रहणमात्रं अतएवेदानींतनक्षेत्रदानेऽपि न भूदानसिद्धिः किंतु तत्र वृत्तिकल्पनमात्रं भौमिकेभ्यः क्रीतेन तु तत्सिद्धिः अतएव क्रीतगवादिजातवत्सादौ स्वीयगवादिजातत्वरूपोपायस्य शास्त्रेणाबोधनेऽपि स्वत्वव्यवहारः नन्वेवं स्वीयभार्यायां सत्त्वपुत्रकन्यादौ स्वत्वं स्यात् न चेष्टापत्तिः तथा सति विश्वजिति सर्वस्वं दद्यादिति विहितसर्वस्वदाने तेषां दानापत्त्या कन्यापुत्रादिर्न देयमिति षाष्ठसिद्धान्तभंगापत्तेरिति चेन्न भार्यायां स्वत्वानुगमात् विप्रभार्यायां प्रतिग्रहेण स्वत्वमिति चेत् तथापि क्षत्रियभार्यायां तदभावात् एवं च भार्यायां तल्लेः पत्नेन स्वत्वं लोके स्वत्वास्पदीभूतादुत्पत्तेरेव स्वत्वप्रयोजकत्वात् एवं क्षत्रियादिदत्तके प्रतिग्रहो गौण एव सजातीयेष्वयं प्रोक्त इति सजातीयेनैव सजातीयस्यैव प्रतिग्रहविधानात् न चैवमपि विप्रान्यप्रसेवसमुत्पादनं तद्विरोधो युगपद्वृत्तिद्वयविरोधापत्तेः न च पुत्रप्रतिग्रहविधिर्विप्राधिकारिक एव न क्षत्रियाद्यधिकारिक इति सुवचं दौहित्रो भागिनेयश्च शूद्रस्यापि च दीयत इति वचनेनेतरेषामप्यधिकारात् तथा च न षाष्ठसिद्धान्तभंगः एवं ब्राह्मविवाहविधिना विप्रस्य क्षत्रियकन्याविवाहे दाने प्रतिग्रहयोर्गौणत्वादन्यत्र मुख्यत्वाच्च युगपद्वृत्तिद्वयविरोधः क्षत्रियादीनां तु ब्राह्मादिविवाहप्रवृत्तिः सर्वसमैव एवं च तादृशविवाहोढायां विप्रायामपि न स्वत्वमिति भार्यापदे पैव स्वकुटुंबाविरोधेन देयं दारसुतादृते इति याज्ञवल्क्यवचस्तु नांतरीयक इति वद्दनुवादमात्रं यत्तु षष्ठे गर्भदासदासानुक्तं तत्तन्मात्र इहान प्रतिग्रहक्रयविक्रयाद्यभावेन न तु सत्त्वेऽपि तत्र स्वत्वाभावाच्चेत्स्वमिति सजातीयेष्वयं प्रोक्त इति ब्राह्मादिविवाहवत्संक्षिप्तविधिसमाहारमात्रं तथा च दत्तके भार्यायां च विप्रादिभेदाद्विधिभेदः तेन विप्रदत्तको विप्रभार्या च मुख्यास्ततस्त एव दारसुतादृते इति निषेधः लोकसिद्धस्वत्वं च गर्भदासेऽपि कार्यकारणभावांतरमुपेत्योपेयमिस्वपि केचित् न भवत्येवेति संस्कारो नरं द्व्यामुष्यायण इति मतांतरं संतव्यं केवलदत्तकश्च व्यवस्थापित एवेति शिवं ॥ ॥ द्वादशेति ब्राह्मणस्यैकादश्याह द्वादशाहो क्षत्रियस्य त्रयोदशाहः वैश्यस्य षोडशाह विंशाहो षोडशेवा



निक्षापि दत्तके न स्वत्वं ९

नविंशे वेति पाठे षोडशाहे कोन विंशत्सहो· शूद्रस्य द्वात्रिंशे इत्यर्थः· दशम्यामिति· एतेन दशमे द्वादशे वापि जन्मतो दिवसे शुभे· षोडशे विंशतौ चैव द्वाविंशे वर्ण
तः क्रमादिति पठित्वा आशौचमध्ये नामकर्मेति फलं तःपरास्ताः· यथाचारं नियत दिने वेति प्रयोगरत्ने तदुक्तं शतरात्रे संवत्सरे वेति· अत्र मुख्यकालादौ व्यतीपाता
दि सत्वे उत्तरेषु कालेषु कार्यं व्यतीपातादौ कर्मणो निषेधात्· तमेव निषेधमाह मेति· विष्णादा विसादिना· व्यतीपाते च संक्रान्तौ ग्रहणे चैव यत्नावपि· श्राद्धं कुर्यात् शुभे नैव प्रात
काले पि मानवः इति गार्ग्योक्तेः वैधृति व्यतीपात ग्रहणानां ग्रहः· गुरुशुक्रास्त बाल्य वार्धक्य वक्रातीचार मलमासादिनिषेधस्तु नास्ति उक्तकालातिक्रमे तु ज्योतिःशास्त्रोक्ते शु
भे काले कार्यं· नाम षष्ठे स्यद्दशम्यां तु द्वादश्यां वापि कारयेत्· पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते इति नियमोक्तेः· देशकालोपपत्त्याद्यैः कालातिक्रमणं यदि· अनस्तोदये
तेन कार्यं चोत्तरायणे इति नारदोक्तेश्च तमेव शुभकालमाह मित्रेति· बृहस्पतिः पूर्वाह्णः श्रेष्ठ इत्युक्तो मध्याह्नो मध्यमः स्मृतः। अपराह्णं च रात्रिं च वर्जयेन्नामकर्मणि· अत्र कुल
देवता संबद्धं नाम प्रथमं कुर्यात्· वचनं लौगाक्षिः· तच्च श्रीमहालक्ष्मी भक्त इत्यादि· ततो मासनाम· नामपूर्वं तु मासस्येति पूर्वशब्दस्थानात्· ततो मासनाम प्रथमं द्वयादिति वा स्या च· मार्गेति कृ
ष्ण मार्गशीर्षादि द्वादश क्रमो न चैत्रादिः· चैत्रादिमास नामानि वैकुण्ठोऽथ जनार्दनः। उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः। योगीशः पुण्डरीकाक्षः कृष्णोऽनन्तोऽच्युतस्तथा। चक्रधारीति च
लानि क्रमादाहुर्मनीषिण इति गार्ग्योक्तेरित्यर्थः। यदि मलमासे जन्म तदोत्तरमासनाम· षष्ठ्यां तु दिवसे मासस्य तु क्तवाक्यात्· ततो नाक्षत्रं नाम कृत्वा व्यावहारिकं नाम कार्यं· अत्र
नामकर्म करिष्ये इत्येव संकल्पः कुलदेवतादि नामकरणस्यापि प्रधानत्वात्· यद्यपि नराश्वलायनगृह्यसूत्रे नास्ति तथापि पारस्करसमविरोधिपरिस्तुक्तेरावश्यकं· अन्यथा
मासनामादीनां तत्रानुक्तेर्दर्शादि प्रधानत्वानुपपत्तेः· किं चैतेषां करणं भवन्मते गतया अंगप्रधानेतर कर्मणोऽतिरिक्तत्वात्· तल्लोपे च प्रायश्चित्तं भवन्मतेऽपि अन्यथा नेत्रां
गापूर्वानुदयेन प्रधानापूर्वानुपपत्तेः· तस्मादस्मदुक्तनाम्नोऽस्त्येवेति पुण्याहवाचनादौ प्रयोगो न युक्तः· किं च यत्र पूर्वं व्यावहारिकस्थापना मनिश्चयो नास्ति तत्र कृ
षस्पादिति· अत्र व्यावहारिकं नाम शर्मान्तं ब्राह्मणस्य सादिनादर्शितं· तं च अग्निपुरुषवाचि वा देवतावाचि वा स्त्रीष्टं वा कार्यं॥ देवतानां विशेषेण पित्रोर्वा नामशस्यात्·
इति कपिलसंहितावाक्यात्· पित्रोः कर्तुः पित्रोः स्वेष्टमाह पारस्करः· दशम्यामुत्थाप्य ब्राह्मणान् भोजयित्वा पिता नाम करोति द्व्यक्षरं चतुरक्षरं वा घोषवदाद्य ३३
न्तरं तस्थं दीर्घाभिनिष्ठानं कृतं कुर्यान्न तद्धितं· अयुजाक्षरमाकारान्तं स्त्रियै तद्धितमिति· घोषवद्वर्णाद्यपादौ यस्य तत् घोषवदादि। घोषवन्ति अक्षरा
णि च वर्गाणां तृतीयचतुर्थपंचमानि हकारश्चैतानि· अंतर्मध्ये अंतस्था यरलवा यस्य तत्· दीर्घा स्वरमभिनिष्ठाने समाप्तो यस्य तत्· कृतं प्रत्ययग्रहणे
न दंतग्रहणमपि ज्ञिपरिभाषया कृदंतं· न तद्धितं न तद्धितांतं· अयुग्माक्षरं· ईकारान्तं च न कुर्यात्· तदेतत्त्वं स्त्रियै हितमित्यर्थः· आश्वलायनः नाम चास्मै दद्युः
घोषवदाद्यंतरंतस्थमभिनिष्ठानांतं द्व्यक्षरं चतुरक्षरं वा द्व्यक्षरं प्रतिष्ठाकामश्चतुरक्षरं ब्रह्मवर्चसकामः युग्मानि त्वेव पुंसाम् अयुग्मानि स्त्रीणामिति· घोष

वद्धादि अंतरंतस्थमितिप्राग्वत् अभिष्ठानो विसर्गः अंतेयस्यतत् अन्तस्थं स्वरः व्यंजने पुनसंख्यानियमः युग्मानिलेखेति तद्न्यल स्वणामलेपिन दोषइ
त्यर्थः तेन देवदत्ता दिवदुदुद्रसादिषड्क्षरादिकं वा भवति महाभाष्ये घोषवदाद्यंतस्थमध्यंमन रिप्रतिष्ठितं कृतं कुर्यान्न न द्धितं त्रिपुरुषानूकमिति अ
वध्यं वृद्धिर्यस्याचामादिस्त द्वृद्धं तद्धितं अनरिप्रतिष्ठितमिति एवंनैव कार्यंन्न पारितां नामजीवनहेतुतः पूर्वः परस्यवर्णस्यहीनस्यापिन धारये दित्यपिबो
ध्यं त्रिपुरुषानुकायति अभिधनेनेत् अन्येषामपीतिदीर्घः अयुग्मानीति विशेषमाह गोभिलः अयुग्माक्षराणामिति यशोदाशर्मदेत्यादिः के
चित्तु यन्नाम तद्धांतं कार्यं यथा पार्वतिदाद्धादिद्रसाहुः तस्मात्ययोदादाइसेव स्यात् हे वालमेत्यादिदेवालपादीनां नामकार्यमित्यर्थः
वासिष्ठः तच्च द्यक्षरं वा चतुरक्षरं वा यिवर्जयेदंसलकोदरेफौ तन्मासनामादिकमेव चिसंस्कारं वदंद्दक्षिणकर्णे द्ये॥ नाक्षत्रंमावहा
रिकं च कार्यमित्याह नाक्षत्रमपीति अभिवादनीयं उपनयनेयन्नाम्ना ऽभिवादनं कर्तव्यं तत्तथा वैहारिकं कुलेति कुलसंबंध्यं देवतासंबद्धं नक्षत्रसं
बद्धं चेत्यर्थः तेरेति रोहिणी रेवतीमृगाम गशीर्षज्येष्ठा चित्राश्वत्थु आदिवृद्धिः रोहिणः रेवतः मार्गः मार्गशीर्षः ज्येष्ठः चैत्रः ठालेइतीति ठ
कारोस्कारे परे वृद्धिः चकारादादौ च प्रोष्ठपादः जेप्रोष्ठपदानामिति सूत्रात् श्रवणाद्याविति श्रव श श्रवण शतभिषक् अश्वयुक् एषु वा आदिवृद्धिरित्य
र्थः इत्याहीति आदिनाश्रवणः श्रावणः शतभिषक् शातभिषजः अश्वयुक् आश्वयुजः जानार्थेऽणु उद्धृवक्रव्य इतिवाणिनिसूत्रात् शतभिषइत्यपि
बोध्यं शेषेष्वत्यादन्येषु आदिवृद्धिर्न कृत्तिकः तिष्यः आश्लेषः पूर्वाफाल्गुनः उत्तराफाल्गुनः हस्तः विशाखः अनुराधः पूर्वाषाढः उत्तराषाढः धनि
ष्ठः पूर्वाभाद्रपदः उत्तराभाद्रपद इति आम्नोः आर्द्रामूलयोः अयंः स्वरः कपरो भवति आर्द्रकः मूलकः स्वास्वोः स्वातीपुनर्वस्वोः अंत्यः स्वरः आदिः
दीर्घोर हिलः हस्वइतियावत् सविसर्गश्चइष्टः स्वातिः पुनर्वसुरिति तिग्मासं अधिकारिणमाह शंखः पिता वा कुर्याद् न्यो वा कुलवृद्ध इति
नामकरणमितिप्रकृतं स्वगृह्योक्तराहणादि ज्योतिर्विदादिष्टमुहूर्ते कार्यं नक्षत्रेदृइत्यादि यस्मिन् दिने नक्षत्रजन्म तिथिर्दृष्टं वा तद्दिनं वर्जयेदि
त्यर्थः जन्ममासइतिप्रथमाद्वे विहितविनजियधानवकाशादिदृद्वितीयाद्यब्दपरं सर्वोषधीति छंदोगपरिशिष्टे कुष्ठमांसहरिद्रे द्वे मुरा
शैलेयचंदनं वचाचंपकमुस्तां च सर्वौषध्योदशस्मृताः अपरार्के वूला चदस्वेपुष्पी च कुष्ठं चैव वचा तथा नागकेसरचूर्णं च सर्वौषधिगणो
मतः महार्णवे मुरामांसीवचाकुष्ठं शैलेयं रजनीद्वयं सटीचंपकमुस्ता च सर्वौषधिगणो मतइति जन्मतिथिरिति नरेंद्रोराजमार्तंडः प्रत्यब्दंजन्मतिथिर्यदिस्या

34

कुर्यात् राजन्मभसंयुतां च · असंगतानेनाह्निन द्युपैवेत पूर्वाषाढा मा भवती हम्मलाह्विति · स्वद्वारेह दुग्धपान कर्णवेधनिष्क्रमणजीविकापरीक्षोपवेशनव
राह्लादिपूजा अन्नप्राशनाद्यपूर्तिकटिसूत्राणि मयूखवादेकौस्तुभादौ प्रयोगपारिजातादौ च विस्तरेण लिखितव्यानि ॥ ॥ जातेलि · तत्रीयाद्रुपनीतासहेति कालो·
प्रथमद्वितीयतृतीयपंचमेतसमाः कुलधर्ममनुसृत्य कालाः तेच जन्मतो मुख्याः गर्भतो गौणाः । उदगयनमावश्यकं · शुक्लपक्षश्च मुख्यः · कृष्णपक्षोस
त्ततीयभागं विना गौणः · उदगयन आपूर्यमाणपक्षे कल्याणेन क्षेत्रे चौलकर्मोपनयनगोदान विवाहइत्याश्वलायनस्मृतेः गुरुशुक्रयोर्बाल्यवार्धक्यास्त
मयोः म · लमासश्च वर्ज्याः चंद्रेश्वरः । मार्गमासि तथा ज्येष्ठे क्षौरं परिणयं व्रतं · ज्येष्ठपुत्रदुहित्रोश्च यत्नेन परिवर्जयेत् · वत्न शतेः न जन्माधिष्ठेन न जन
न्ममासेन जन्मकालीयदिने विदध्यात् · ज्येष्ठनमासि प्रथमस्य सूनोस्तथा सुताया अपि मंगलानि · जन्मदिने विशेषः · पापग्रहाणामिति निर्धारणेष
ष्ठी · वारादिः सूर्यः । राश्यादिनिषेधानामग्रे विस्तरं सूचयति · अन्ये चेति · मातृतिजननियम्यर्थकं · तेन सपत्नमातुर्गर्भे पिन दोषः · तदुक्तं मदनो जिनाभिन्न
भार्यासुतस्येह न दोषश्चौलकर्मणीति · सहोपनीतेति · सूनुसूनोर्मातरि गर्भिण्यां मौंजीचूडेन कार … निषेधकं नतु सहितस्येति · अ
भिषेकः स्नानं समावर्तनं · संकटे इति · मुहूर्तान्तराभावे नांदीश्राद्धानंतरं चौलप्रयोगस्येमांसः पूर्वं चेत्यर्थः · वाक्यसारे इति · चतुर्थदिने पीति शेषः
विधिवदिति · विवाहस्य षष्ठं · नाचमेदइत्येनेनाबसे देनदोषइत्यर्थः सूचितः · कु · लं · त्रिपुरुषं · पुरुषत्रयपर्यन्तमित्यग्नेवचनात् · प्रेतकर्माण्यनिवृत्यस
पिडगर्भिमिह स्मर्तव्यं · मण्डेति · मध्यशिखापार्श्वोपनयनेवपनं नु कार्यमिति बोध्यं · पंचहोमेति · यत्तु मनुः मुंडोवा जटिलो वा स्यादथवा स्याच्छिखी
इति · कात्यायनः सशिखं वपनं कार्यमास्नानाद्ब्रह्मचारिण इति सर्वमुंडलं तत्सामगानामेव · एतेन चूनशिखायास्तस्य दर्शनेर प्रिरोधः · कुशकाश
विराजलेव टवः स्नामगाद्वेति विष्णुपुराणादित्यर्थः · कौशुम्भिः शिखि वछिखया भाव्य ब्रह्मावर्तनिबद्धया · मरद्दक्षिणदिग्भागे वसपाश्चात्तः संप्रवेश
नात् · प्रथमं दक्षिणं कृत्वा ब्रह्मावर्तमितीरितं · गायत्रीजपनं कार्यं शिखाया विधिबंधने इति · मंडलोर्ध्व शिखिनइतिपाठः · जातकर्मादीनां लो ३४
पे प्रायश्चित्तमारभ्या धानमाचौलादि तुपनयनेवस्यति · आपत अनुष्ठानपद्धतिः अन्त्येति · विद्यारंभ स्वगुरुं पूजयित्वा कार्यः · प्राङ्मुखो गुरुरासीन
वारुणाभिमुखः शिशुः । अन्यापयीत प्रथमं … लिपिञ्च सम्पूजितइति वचनात् · गणेशं ब्रह्म लक्ष्मीकं हरि हरं देवीं सरस्वतीं । स्वविद्यासूत्रकारांश्च स्वविद्यां च प्र
पूजयेत् · धात्रीपूजनमपि कैश्चिदुक्तं · स्वविद्यास्तत्र शाक्तोव स्यालंकार बहु हदि णादिरिति · नैमिहः । ततः प्रभृत स्नानध्यायान् वर्जनीयान् विवर्जयेत् · अ
ष्टमी द्वितयं चैव पंचदशी लेच दिनत्रयं … एतेन वृंदावने श्रीहरेर्विहारे नुमतिर्लभ्यते · नहीशाला तदनुमतिप्रयुक्तावर्त्त एवच कर्मणी

त्रीपतिता व्रात्या व्रात्यस्तोमाद्दते क्रतोरिति याज्ञवल्क्यवचनात्· पातित्येतु असमर्थस्य मनुः येषां द्विजानां सावित्री नानूच्येत यथाविधि तांश्चारयित्वा त्रीन्
कृच्छ्रान् यथाविध्युपनाययेदिति· शक्तस्य सामग्रीवैकल्येन पंचदशवर्षातिक्रमेतु यमः सावित्रीपतिता यस्य दश वर्षाणि पंच च· सशिखं वपनं कृत्वा व्रतं कुर्या
त्समाहितः। एकविंशतिरात्रं तु पिबेत्प्रसृतियावकं· हविर्भोजयेच्चैव ब्राह्मणान् सप्त पंच च द्वादशोऽस्य वर्षः। ततो यावकशुद्धस्य तस्योपनयनं स्मृतमिति·
उपनेत्रादिसकलसामग्रीसत्वेपि कामतः गौणकालातिक्रमेतु उद्दालकव्रतं चरेत्· पतितसावित्रीक उद्दालकव्रतं चरेत्· द्वौ मासौ यावकेन वर्तयेत्· मा
सं पयसा· अर्धमासमामिक्षया· अष्टरात्रं घृतेन· षड्रात्रमयाचितं· त्रिरात्रमब्भक्षोऽहोरात्रमुपवसेत्· व्रात्यस्तोमेनुवा यजेतेति वसि
ष्ठोक्तेः। तथाच याज्ञवल्क्योक्तः व्रात्यस्तोमः सकलसामग्रीसत्वेपि अकृतोपनयने बोध्यः। उद्दालकव्रतापाकस्यतु आपस्तंबः। अतिक्रांते सावित्र्याः का
ले ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं ततः संवत्सरमुदकोपस्पर्शनमथाध्ययनमिति· ऋतुं मासद्वयं त्रैविद्यकं ब्रह्मचर्यं वेदत्रयार्थं भैक्षायनगुरु
शुश्रूषादिकमिति· वस्तुतस्तु व्रात्यस्तोमं विनोपनयनेनाधिकारः· सावित्रीपतिता व्रात्या व्रात्यस्तोमाद्दते क्रतोरिति वचनात्· सचानुपनीतेनानाहिता
ग्निनोऽपि द्विजेनापि अवकीर्णिपशुवत्कार्यः· यागोपयुक्ताध्ययनेनमग्नसा (?) कार्यं ततः स्मृत्युक्तं प्रायश्चित्तं कृत्वोपनयनं कार्यमिति· केचित्तु गौणकालानं
तरे संवत्सरे प्रमोत्तं (?) यावकव्रतं· तदुत्तरोत्तरसंवत्सरेषु क्रमेण मनूक्तं कृच्छ्रत्रयं १ आपस्तंबोक्तमृतुं त्रैविद्यकं ब्रह्मचर्यं २ उद्दालकव्रतं व्रात्यस्तोमो वेत्याहुः·
गुरुशुक्रादिमहबलासत्वे मासिकादेरपकर्षाभावाद्वा त्वपनेत्र (?) भावाद्वा गौणकाले उपनयनं कार्यं· बुद्धानुसृत्य कालसौगेत्तु (?) चीनकृष्णान् वसुश्चरे
ति वटप्रायश्चित्तं द्विगुणमिति विशेषः· जन्ममासे इति· जन्ममासस्थ· आरभ्य जन्मदिवसं यावत् त्रिंशद्दिनं भवेत्· जन्ममासः सविज्ञेयो गर्हितः सर्व
कर्मस्विति दृत्यः (?)· यदि जन्ममासः सत्कुनशक्यतेन दाह ज्ञातमिति· तिथौजन्मतिथौ· भे जन्मनक्षत्रे· विपरीतदलं उत्तरभागः· शुक्लेति· शुक्लेगते च
राष्टकवर्गाभ्यां वस्तुतः प्रशस्तः सूर्यगते भानौ मेषमीनमेषयोः। उत्तमं गोसुगस्थे के शुद्ध धुमं चोपनायनं मतिबृहस्पतिः। तत्रापि मीनार्के शुक्ल
क्षेत्रः प्रशस्ततमः। अनेकनिषेधापवादकत्वात्· अत्र शुक्रे नष्टे तथा जीवे दुर्बले चंद्रभास्करे। तदोपनयनं कार्यं चैत्रे मीनगतेरवौ· जीवभार्गवयोरस्ते
सिंहस्थे देवतागुरौ। मेखलाबंधनं शस्तं चैत्रे मीनगते रवौ। विसादृश्ये पिंडकृत्स्य। धर्मकामौरश्यामौ विषयौ हृष्टा· कृष्णे पंचम्यंतमतितिथ्य (?) म्युपनायन
हतिवचनात्पंचम्यापर्यंताः प्रशस्ताः षष्ठ्यादयोऽप्रशस्ताः इत्यर्थः। एतदिति· इह मुपलक्षणं· प्रापाष्टमी नाड्येपनयनविषमतायाज्ञ (?) पित्वा व्यापवितु
तोपस्नाद्यस्य त्र्यत्क्रत्वात्· प्रतिपत्प्रभृति समम्यादेरुपलक्षणमित्याह· एवमिति· सप्तम्यपीत्यपिना त्रयोदशी समुच्चयः तस्यापि गलग्रहत्वात्· अतो

तत्काले सत्यादि वर्त्तते· एवं माघादिमासषट्के क्षितिषष्ठ आषाढमाघादिशुक्लां तक पंचमासाद इत्यनेन विरोधात्· पंचम्यंतकृष्णपक्षश्चापूर्यमाणपक्ष इत्यनेन
विरोधाच्चाचार्यविषयक:· एवं सार्वकालमेके विवाहमिति आचार्यकन्याविषयकमिति बोध्यं· यत्तु चैत्रे कृष्णद्वितीयायां तिस्र एवाष्टकास्तु च· मार्गे च फाल्गुने चै
व आषाढे कार्त्तिके तथेति· अनध्यायवचनं तत्र कृष्णद्वितीयायामपि सत्तुषंगान्मैत्राद्दिपंचकृष्णद्वितीयालाभात् इन्य कार्त्तिकमार्गशीर्षयोरुपनयनाभ्यनुज्ञावैश्य
परा· विप्रस्य क्षत्रियस्यापि मौंजी स्यादुत्तरायणे· दक्षिणे च विशां कार्यानानध्यायेन संक्रमे इति वचनात्· विप्रक्षत्रिययोः आपदि क्षत्रियोपनयनपरा च· अनध्या
येपि कुर्वीत यस्यानैमित्तिकं भवेदिति वचनात्· अनध्यायेपीत्यधिनावैश्योपनयनसंग्रहात्· एवं च राशित्रिभागः समाख्यातः स्वरांत्योर्इ दक्षिणायनं· व्रतबंधादि
कं तस्मिंश्च शुभकर्म च वर्जयेदिति· दक्षिणायननिषेधो न तत्र प्रवर्त्तते· एवं चंद्रे बलयुते लग्नाच्छुभभावेषु भे स्थिते· चतुर्दशीं प्रशंसंति कुमारे वयसाधिके इति
च आचार्यविषयं प्रायश्चित्तोपनयनविषयं चेति रामचंद्रः· विनर्त्तु नेति वसंतेन वर्णभेदेन विहितेन तत्तदृतुना विना कृष्णपक्षे गलग्रहे उपनीता इत्यन्वय
फलमाह वसंते इति· वसंते गलग्रहे नदोषायेसे कोन्वयः· वसंतपदं च तत्तद्वर्णविहिततत्तदृतुपरं· अलंतरीयशुक्लपक्षे च गलग्रहे न दोषायेसपरः। अथ
राह इति· उदये सूर्योदयात्पूर्वं मुहूर्त्तानां तु पंचके· पूर्वाह्णः प्रथमः प्रोक्तो मध्याह्नस्ततः परं· अपराह्णस्ततः प्रोक्तो मुहूर्त्तानां तु पंचकमिति स्कांदात्· तत्र पूर्वाह्णो
मुख्यः· मध्याह्नो नुकल्पः· सर्वे ह्युपपूर्वाह्णे मुख्यं स्यादुपनायनं· मध्याह्ने मध्यमं प्रोक्तमपराह्णे तु गर्हितमिति ज्योतिर्निबंधात्· एवं च मध्याह्नो नुकल्पे तथाधोर्य
पनयनवाक्याच्छुपनये चोपादेयः· गौणाक्रमपि पूर्वमुख्यो बस्य त्याज्यतया प्राप्तो माध्यंदिनगुरुप्राप्तस्त्वत्र मध्ये कृतत्वे· ण दिनभागस्यापादानीत· केचित्तु अष्टमाद्
दावपि गौणतया मध्याह्नमंगीकुर्वंति· यत्र पूर्वाह्णकाले गुरु[illegible]शिष्यविरोधनिवारकं निशीथलग्नं जातं उपनयनं तु तदुत्तरमुहूर्त्तादिष्ववधानेन मध्याह्ने तत्र पूर्वा
ह्णोपनयनं क्रमेण कार्यः· एवं क्रमेण युगपत्पराह्णे जातं तदा पुनः संस्कारः कार्य इति· अनध्याये चेति· इदमनध्यायपदं नित्यनैमित्तिकानध्यायसामान्यपरं·
36 अनध्यायपदस्य नित्यानध्यायपरत्वे नैमित्तिकानध्याये नैमित्तिकानध्यायपरत्वे च नित्यानध्याये· पूर्वोपनयनापत्तेः· नैमित्तिकमनध्यायं कृत्वे च प्रतिपद्दिनमि
ति· नैमित्तिकानध्यायानां कृष्णप्रतिपदादि नित्यानध्यायानां चाचार्योपनयनपरत्वेन स्वाध्यायविमुञ्जोपकल्पाद् इति वाक्याहायश्चित्तोपनयनपरत्वापि
नत्पूर्वोपनयनपरत्ता· अन्यथा नैमित्तिकानध्याये प्रतिपद्दिवापूर्वोपनयनापत्तेः· एतेन पुनः संस्कारविधिगतानध्यायपरं नित्यानध्यायमात्रपरं न तु
नित्यानध्यायपरमपीत्यपास्तं· पुनः संस्कारः पुनरुपनयनमेव न जातकर्मादि उपेन पूर्वस्य विशेषेणोपनयनस्यैवाचार्येण विधानात्· अनध्यायस्येति·
इदं अनध्यायपदं नित्यानध्यायपरं नतु नित्यानध्यायपरं· तेषामनित्यत्वेन नित्यानित्यसंयोगविरोधात्· अत्रानध्यायासंग्रहे द्वितीयाभिज्ञं नाहस्ये द्विती

माघादिविहितत्वात्. ननु गलग्रहेष्वपि नवमीगणनात् अनध्यायोत्तरदिननिषेधो व्यर्थः। मैवं। निषेधद्वयेन रोगादिकस्य कल्पनात्. यद्वा नवमी यत्र पंचमुहूर्त्ता ततो
न्यूना वा तत्र गलग्रहनिषेधो न वृत्त्यंतरं न प्रवर्त्तते निषेधः कालमात्रके इत्युक्तेः। तत्रापि सार्थकः। आरंभेति। बह्वृचभिन्नानामुपनयनदिने वेदारंभः। तदनंतरदिने
ऽनध्यायवशाद्ध्यारंभो न जायते इत्यर्थः। अनेन छलेन सप्तमीत्रयोदश्यावुक्तौ। वैशाखमासस्य तु या तृतीया नवम्यसौ कार्त्तिकशुक्लपक्षे। नभस्यमासस्य तमिस्र
पक्षे त्रयोदशी पंचदशी च माघे। एता युगाद्याः कथिताः पुराणे इति। आश्वयुक्शुक्लनवमी द्वादशी कार्त्तिके तथा। तृतीया चैत्रमासस्य तथा भाद्रपदस्य च। फाल्गु
नस्याप्यमावास्या पौषस्यैकादशी तथा। आषाढस्यापि दशमी तथा माघस्य सप्तमी। श्रावणे चाष्टमी कृष्णा तथाषाढे च पूर्णिमा। कार्त्तिकी फाल्गुनी चैत्री ज्येष्ठी
पंचदशी तथा। मन्वंतरादयश्चैता इति। षष्ठी चेति। आदित्यास्तमयादूर्ध्वमर्धरात्रात्त्रयोदशी। सप्तमी च चतुर्थी च नवनाडीषु चेद्दिशेत्। तत्र किं यत्नाध्येयं प्रश्ने
थापादिभाषिके इति निषिद्धर्तुरोधेन पृथ्व्यादिः सायंकालीनो ग्राह्यः। तथोक्तं बृहन्मनुः। चतुर्थ्यां च त्रयोदश्यां सप्तम्यामर्धरात्रतः। अर्वाक् प्राप्यपनं कुर्यात् यदीच्छेत्तस्य
धारणं। स्मृत्यर्थसारे। चतुर्थ्याः पूर्वरात्रे तु नवनाडीषु दर्शने। नाध्येयं पूर्वरात्रे स्यात्सप्तमी च त्रयोदशी। अर्धरात्रादधरात्रे चेत्स्यान्नाध्येयं पूर्वरात्रके इति। वस्तुतश्चा
नध्यायाश्च त्र्यादर्वागिति चेति। चैत्रशुक्लतृतीयायां रथसप्तम्यां भ्रमन्वादित्वेन वैशाखशुक्लतृतीयाया युगादित्वेन फाल्गुनकृष्णद्वितीयायाश्चातुर्मास्य
द्वितीयात्वेन निषेधे प्राप्ते यं प्रतिप्रसवः। न च स्यादप्रशस्ता इति वेद्यं निषेधपरत्वायुक्तेरिति चेन्न। चातुर्मास्यद्वितीयायास्तृतीयाचाद्यत्वात्तथा। उपनीताय
नः श्रीमान्विद्यावान् धनवान्भवेदिति वासिष्ठात्। अत्रापीति। वक्ष्यमाणप्रायश्चित्तार्थोपनयनेपीत्यर्थः। स्वाध्यायवियुजः पत्न्याः स्वाध्यायवर्जितदिनानि। दशाह
नीति। तानि च चंद्रसूर्योपरागे तु त्र्यहं प्रागशुभं भवेत्। सप्ताहमशुभं पश्चात्स्मृतं ग्रहणमूलकमिति गर्गोक्तानि। मत्स्यसंतरे सर्वमासेषु सप्ताहमर्धमासादिनत्रयं चैव
कांगुलतो मासे दिनमेकं तु वर्जयेत्। पंच दिनानि वसिष्ठस्त्रिदिनं गर्गस्तु कौशिकस्त्वेकं च्यवनाचार्यस्य मते पंचमुहूर्त्तं दूषयतीति। राहुरिति। पूर्वाहस्तात्रये पूर्वाह
त्तयोस्तु ये। मूले हस्तत्रये सार्पे शैवे पूर्वात्रये तथा। ऋग्वेदाध्यायिनां कार्यं मेखलाबंधनं बुधैः। शैवमार्द्रा। पुष्ये पुनर्वसौ पौष्णे हस्ते मैत्रे शशांकभे। भुवेषु च प्रशस्तं ३६
स्याद्यजुषां मौंजिबंधनं। पुष्ये वासवहस्ताश्विशिवविष्णूत्तरात्रयं। प्रशस्तं मेखलाबंधं बह्वोः सामगायिनां। मृगेंदुत्राश्विनीहस्ते रेवत्यदितिवासवे। अथर्वशा
खिनां धात्रीभगणो यं व्रतार्पणे इति। ब्राह्मणस्येति। अत्र हेमाद्र्यादिधृतानां पुनर्वसूपनेयविधायकसामान्यवाक्यानां अनेकस्या वाक्यानां च द्विजपदस्वा
रस्येन याजुषादिपदस्वारस्येन च याजुषाथर्वणक्षत्रियपरत्वस्य परत्वेव। न च तानादशाक्षत्रियादेर्मानाभावः उपनीतानां क्षत्रियादीनामपि ब्राह्मणवत्स्वाध्या
याध्येतव्य इति विधिना परं प्राप्त ... सर्वेषां ब्राह्मणानामुपनयने पुनर्वसुनिषेध इति

भावः। तु ना चाह रुचिः सा च विप्राणामपि पुनर्वसू पनयना चारात्पुनर्वसुः पुनरुपनयनकालः इत्यर्थोपगमादिति। जीवेति वर्णाधिपाः विवर्जयेदिति विशे
षेण वर्जयेदित्यर्थः। पूर्वसंख्यागर्जे रोधेषोधिक इति भावः। नांदीश्राद्धे इति। बहूच्यातिरिक्तानां यजुर्वेदिनां तेषां बहूच्यानां एवमग्रेपि। नभवसेवेति लक्षेनानि
येधात्। कौस्तुभे तु कार्यमिसंतं सर्वभारणे वेदारंभं न कारयेदिति निषेधस्तसंभवस्तानिक विशेष विषय इत्युक्तं तत्तु नूतनोपनयनानुष्ठानप्रचारलाभाय
एवकारपूरणेन मुनज्जन्यवादवसंस्कारलाभायेतिवदंति। आश्वलायनानांतु तद्दिने उपनयनाकरणेपि वृद्धिश्राद्धदिनाद्दिनचतुष्टयमेमुहूर्तांतरसत्वे ते
नैव ऊर्ध्वमुहूर्ते च वृद्धिश्राद्धांतरेणैवोपनयनं यथाकालं कार्यमिति प्रयोगरत्ने। प्रातःस्तमितेउपनयनकरणेतु पुनरुपनयनं कार्यं। अनध्यायेकृतो विप्रः
पुनः संस्कारमर्हतीति वाक्यात्। उपनयनचतुरर्थपणयोरंतरानध्याये पुनरुपनयनमिति प्रयोगरत्ने भट्टाः तेत्र ग्निमां शांतिं नमन्यंते ब्रह्मौदनेति। अथ
तत्प्रयोगः। अस्योपनीतस्यामुकशर्मणो ब्रह्मौदनविधेः प्राग्गर्जितादिसूचिताध्ययनविघ्ननिरासद्वारा श्रीपरमेश्वरप्रीत्यर्थं शांतिं करिष्ये इति संकल्प्य गण
पतिपूजनं स्वस्तिवाचनं कृत्वाचार्यवरणादि स्थंडिले ग्निं प्रतिष्ठाप्य चक्षुषी आज्येनेत्यंते अत्र प्रधानं सवितारं अष्टोत्तरशत साज्यपायसाहुतिभिः शेषेण
स्यादि। हस्तेन गायत्रीमंत्रेण १०८ प्रधानहोमः ततआचार्यो यस्त्वंमेति बृहस्पतिसूक्तं पठेत् ततः स्विष्टकृदादि कर्मशेषं समापयेत्ततो यजमानः आचा
र्याय सवत्सां धेनुं दद्यात्। अष्टोत्तरशत ब्राह्मणभोजनं संकल्प्य ब्रह्मौदनं पचेदिति। भ्रातापितुरेव अविभवाक्यात्तु सोदरः तस्याविभवाक्ये ज्ञेति लिवेश
त्। ज्ञातयः अस्मगोत्रसपिंडमातामहादयः गोत्रजाः सगोत्रसपिंडाः पितृव्यपुत्राद्याः गोत्रजाग्रजा इति संधिरार्षः अग्रजाः वृद्धोरधिकवयसः एतत्र
पितृव्यमातृष्वसर्वत्र विशेषणं। पितृआभावे ज्येष्ठभ्रातुरधिकारः तदभावेतु सोदर इत्युक्तेः। मतांतरमाहात्रेति। इदं मतं कौस्तुभकृतामपि विमतं
यादवत्स्यवचनेपि पितृव्यादसर्वत्राप्रतीतेश्च। मयूखकृदुक्तं तद्वचनस्य भगिनीविवाहविषयकत्वमुक्तं केचित्तु अविभक्तस्य भ्राता विभक्तस्य सोदर
39 इत्याहुः। तन्न। तदभावेतु सोदर इत्यनेन विरोधात्। तदभावेपीति पाठं कल्पयित्वा अपि शब्दोत्तरलसमुच्चय इति तु केचित्। उक्ताधिकार्यभावे तु व्यासः।
वेदैकनिष्ठं धर्मज्ञं कुलीनं श्रोत्रियं शुचिं। स्वशाखीयमनालस्यं विप्रं कर्तारमीप्सितं। शौनकः। कुमारस्योपनयनं श्रुताभिजनवृत्तवान्। तपसाधूतनिःशे
षपाप्मा कुर्याद्द्विजोत्तम इति। तस्माच्छ्रेष्ठस्य तदपसंच संस्कार्यमिसंतं संबंधः। तस्मादुक्तं श्रुत ब्राह्मणलाभे वंठे चौ यादीनामुपलक्षणं पद्योचितं अत्र

स्यां गं विहाय· अन्यथा मत्तोन्मत्तौ संस्कार्यौ· संस्कारमंत्रा उपनेयस्य वासःपरिधानादेर्ये मंत्रास्तानाचार्य एव पठेत्· हेमाद्रीनाचार्य एव कुर्यात्· आचार्य
समीपं अग्नि समीपं वा नयनं सावित्रीवाचनं वा· एषां प्रधानमन्यतमेन प्रधानसिद्धिरित्यर्थः· मूकबधिरादेः सावित्रीवाचनासंभवात्· स्वयं तु सावि
त्रीजपः कार्यः· वस्तुतस्तु आचार्यः स्वसमीपं अग्निसमीपं वा बटुमानीय सावित्रीं वाचयेत्· अथवा बटुं संस्पृश्य सावित्रीं जपेदित्यर्थः· तथा चाचार्यस
मीपनयनांगको गायत्र्युपदेशः प्रधानं मूकादेस्तु तादृशो गायत्रीजप इति· कोरेति एतेषां विवाहाभावात्तदृतुजस्य न परिवेदनदोष इति भावः· कुंडेति·
सवर्णेभ्यः सवर्णासु जायंते हि सजातयः· अनिंद्येषु विवाहेषु पुत्राः संतानवर्धनाः इत्यस्यवेत्भ्यः सवर्णेभ्यः अनिंद्यविवाहोढायां सवर्णायां जातः
तत्समानजातीय इत्यर्थः· विज्ञास्वेष विधिः स्मृत इत्युपसंहारे विज्ञपदोपादानात्· स्वजेति· सवर्णज इत्यर्थः· अन्यस्येति· तेषां शूद्रधर्मेषु द्विजधर्मस्वपा
दिषु साधारणधर्मेष्वहिंसादिषु चाधिकारः· वस्तुतस्तु कुंडगोलककानीनादीनां विज्ञानेश्वरमते असवर्णत्वमेव· नन्वेवं कुंडगोलकयोर्ब्राह्मण्ये
श्राद्धप्रतिषेधो व्यर्थः· किंच ब्राह्मण्यां ब्राह्मणादुत्पन्नस्य ब्राह्मण्यमपि विरुद्धं· तज्जातीयात्तज्जातीयायामुत्पन्नस्य तज्जातीयत्वमिति न्यायात्· यथाग
विगोरुत्पन्नो गौरिति· मैवं विज्ञास्वित्युपसंहारेण तस्य ब्राह्मणत्वात्· असंताप्राप्तपतितनिषेधवद्वाद्भूत निषेधः उक्तन्यायश्च प्रसक्तगम्यत्व
नुष्यस्य गोत्वादिष्वेव न तु ब्राह्मणत्वादौ तस्य स्मृतिगम्यत्वादिति· उपनयनं च कुमारं भोजयित्वा कार्यं· प्रागेवैनं तदहर्भोजयंतीति गोभिलोक्तेः· उत्तर
तोग्नेः प्रागुदङ्मुखायोपविशायेत्येकः पक्षः· दक्षिणतोग्नेः तिष्ठत आसीनाय वेत्यपरः पक्षः· एक इति पूजार्थे वेदेर्व्यादिति· वस्तुतस्तु गायत्र्युपदेशोग्ने
रुत्तरत इत्येतद्वाश्वलायनीयानामेव· न त्वाश्वलायनानां· तेषां नारायणवृत्तौ प्रयोगपारिजाते जीर्णप्रयोगरत्नपुस्तके च गायत्र्युपदेशार्थमग्नेरुत्तर
तोगमनस्यानुक्तेः· तथा हि प्रथमतः अवधारणार्थं बटुनाग्नेरुत्तरदेशे गंतव्यं· समन्वारब्धे हुतोत्तरतोग्नेः प्रागुदङ्मुख आचार्योवतिष्ठते पुरस्ता २१
त्प्रत्यङ्मुख इतर इत्याश्वलायनोक्तेः· अवधारणानंतरं अग्निकार्यं गुरुदक्षिणत एव स्वस्थाने उपविश्य कार्यं· ततः पूर्ववदासीनगुरुः शिष्योपि
चात्मनोव्यवधानं परिहरन्नग्नेर्गत्वांतिकं गुरोः· आसीनाद्दक्षिणोत्स्ववाहुं परिसमुह्य चेति शौनकोक्तेः· आश्वलायनः· अग्नये समिधमित्यादिह
रन्वीभूयासमित्यंतं अग्निकार्यमुक्त्वा ह जान्वाच्योपसंगृह्य ब्रूयादधीहि भोः सावित्रीं भो अनुब्रूहीति· शौनकोपि मध्यमेधांमयीत्यादेः पद्धिमंत्रे

३४

र्विभाचरेत्। उपतिष्ठेद्गुरुरपि अग्नेः पश्चिमभूतले। आसीनप्राङ्मुखः शिष्योप्याचार्याभिमुखो भवेत्। भूतले दक्षिणं जानुं पातयित्वाभिवादयेत् इति। जपंतो
व्याहृ। अथोभयोरप्यग्नेः पश्चात्सूपोपवेशनं शाकल्यतेनयोपविश्याचार्य इति। जीर्णप्रयोगरत्नेपि मयिमेधामित्यादिमंत्रैरग्न्युपस्थानमुक्त्वा दक्षिणं जानु
न्वाच्य शिष्यवदुपसंगत्याचार्यं ब्रूयात्। अधीहि भो इत्याद्युक्तं। तस्मादाश्वलायनस्यांतरतोगायत्र्युपदेशार्थगमनं प्रमाद एवेति। मातरमेवेति। यद्यपि अ
प्रसारव्यायिनमग्ने भिक्षेतेति सूत्रे पुंभिक्षाया एव प्राथम्यं प्रतीयते तथापि एतत्कारिकायां तथाव्याख्यातृक्यांतरात्प्रमातृभिक्षाया एव प्राथम्यं। अविशेषप्रव
त्तस्य सूत्रस्य स्त्रीभिक्षायामेव प्राथम्येपि अविरोधात्। यद्यपि भिक्षां भवान्ददात्वनुप्रवचनीयमिति वेति सूत्रे भिक्षाया भवन्मध्यतोक्ता तथापि भ
वत्पूर्वां ब्राह्मणो भिक्षेत भवन्मध्यां राजन्यः भवदंत्यां वैश्य इति वचनात्। आदिमध्यावसानेषु भवच्छब्दोपलक्षिता। ब्राह्मणक्षत्रियविशां भिक्षाच
र्यायथाक्रममिति याज्ञवल्क्योक्तेश्च भवत्पूर्वामिति शास्त्रांतरोक्तो विधिर्द्रष्टव्य इति वृत्तिग्रंथाच्च भवत्पूर्वकत्वैव। एवं सूत्रे कारिकायां मत् भवन्म
ध्यवचनं तत्क्षत्रियपरं। अथवानुप्रवचनीयभिक्षायां अप्रसारव्यायिनमित्याद्युक्तायां भवन्मध्यत्वैव। अनुप्रवचनीयं भवान्ददात्विति पक्षो
त्तरे तथैवोक्तेः। अन्यथा वैरूप्यं स्यात्। भवत्पूर्वमित्यादि वृत्तिग्रंथस्य याज्ञवल्क्यवचसोश्च सामान्यप्रातर्भिक्षापरत्वेनोपपत्तेरिति। आरभ्येति। गर्भाधानपुं
सवनसीमंतोन्नयनविष्णुबलिजातकर्मनामकर्मनिष्क्रमणान्नप्राशनचौलकर्मांतनवसंस्काराणां प्रतिसंस्कारं समस्ताभिर्व्याहृतिभिरे
कैकाज्याहुतिरूपं कालातिपत्तिनिमित्तकं प्रायश्चित्तं कुर्यात्। चौलातिरिक्तानां संस्काराणां प्रमादादकरणे प्रत्येकं पादकृच्छ्रं चौलाकरणे अर्धकृच्छ्रं तु
द्धिपूर्वकं चौलातिरिक्ताकरणे प्रत्येकमर्धकृच्छ्रं चौलाकरणे कृच्छ्रं बुद्ध्याकारयेत्। तत्र चौलहोमः कार्य इत्यर्थः। लुप्तसंस्कारकरणप्रसंगं दर्शयति।
त्रिकांडेति। प्रायश्चित्तमात्रेण स्त्रीसंस्कारो मंत्रोमानाभावात् शिश्वभ्युदयार्थत्वाच्चेति भावः। एते च संस्कारा ज्येष्ठस्य कृत्वैव कनिष्ठस्य कार्याः। त्रिकांडमं
डनवचसस्ताद्दशविषयेपि कालातीतेषु ज्येष्ठसंस्काराद्रूप कार्याप्तिसाद्दिक्क्रमेण योजनासंभवात्। ज्येष्ठेऽकृतसंस्कारे गर्भाधानादिभिः कश्चित्
कनिष्ठो नैव संस्कार्य इति शातातपोऽब्रवीत् इति धर्मसारसिंधौ वचनाच्च। ज्येष्ठकनिष्ठपुत्रयोरुपनयने ज्येष्ठदुहितृकनिष्ठपुत्रयोश्च विवाहोपनयन
योः तयोग्निहोत्रमंत्रेषु स्वस्ववच्छ्यामः। पादिजाने एकमातृप्रसूतेषु कन्येवापुत्रकोनयोः। सहोद्वाहं न कुर्वीत तथैव व्रतबंधनं। एतद्दिति मतद्वय
नो दीवाद्विग्निरकरिष्यामः। [illegible] तस्य कर्तुमशक्यत्वादुपनेतोपने

यनाद्याहुतिभिः पुनरग्निमुत्पाद्य तस्मिन्मेधाजननाद्याकालीनमग्निकार्यं कारयित्वा मेधाजननं कुर्यात्‌ कटिसूत्रवस्त्राजिनोपवीतानि धारणाग्नि
कार्यगायत्र्युपदेशादित्युपनयनं भवति वटुसंस्कारत्वात्‌ नाप्यनुप्रवचनीयः तस्योपनयनांगत्वात्‌ अग्निकार्यस्यानुप्रवचनीयाङ्गत्वपूर्वत्वात्‌ सायंसं
ध्याविधिं कृत्वा अथोपनयनानले आचार्यसमिधं पूर्ववत्ततोन्वाधानपूर्वकमिति शौनकोक्तेः एवं च यत्र सायमग्निकार्यात्प्रागुत्तरं वानष्टाग्निनाशः त
त्र तत्पुत्रस्यैवानुप्रवचनीयहोम इति अथ तत्प्रयोगः प्रमादान्नष्टस्योपनयनाग्नेः पुनरुत्पत्तिविधिं करिष्ये अन्वाधाने चक्षुषी वर्जं मुक्त्वा पूर्ववदन्वं संस्कृ
त्य अग्न आयूंषीति तिसृणां ऋषिदैवतछंदांसि उक्त्वा नष्टस्योपनयनाग्नेः पुनरुत्पत्तिहोमे विनियोगः अग्न आयूंषीति तिसृभिः प्रजापतय इति च
हुत्वा स्विष्टकृदादि कुर्यादिति येषामिति अनुपाकृतवेदस्येत्यस्य फलं मधुहोद्वं शुक्लं निष्ठुरवाक्यं भास्करेति ब्रह्मचारिणः सदा सूर्यदर्शननिषेधः
स्नातकस्यैव नेक्षेतोद्यंतमादित्यमित्यादिस्मृतेः नाप्तमपगोचरो निषेध इति भेदः ब्रह्मचारिणो उच्छिष्टान्नमपगोचरो निषेध इत्यन्ये मध्वादीति मधुसो
ई व्याधीपीनव्याधिमान्स्यात्‌ एतत्स्ववरेकापनोद्येभ्याश्यौ कांस्यपात्रे इति लोहमन्मयपयोरपि लोहे मन्मये वा न भुंजीतेति हारीतात्‌ स्त्रीणां तु प्रे
क्षणालंभनाभ्यां संकथनादपि विपद्यते ब्रह्मचर्यमिति वर्तते तत्र प्रेक्षणालंभने मैथुनशंकया यामिति गौतमोक्तेः पतिव्रतानां निषेधः आलंभः स्प
र्शः भाषणोपलक्षणमेतत्‌ कुर्यादितीति आ समावर्तनात्कुर्यात्कृतोपनयनो द्विजः भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेद्व्रती भैक्षेण व्रतिनो वृत्ति
रुपवाससमा स्मृता न भैक्षं परपाकः स्यान्न च भैक्षं प्रतिग्रहः सोमपानसमं भैक्षं तस्माद्भैक्षेण वर्त्तयेत्‌ नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणं
देवताभ्यर्चनं चैव समिदाधानमेव च इत्यर्थः व्यासः जघन्यशायी पूर्वं स्यादुत्थायी गुरुवेश्मनीति मनुः गुरोर्यत्र परीवादो निंदा वापि प्रवर्तते कर्णौ
तत्र पिधातव्यौ गंतव्यं वा ततोन्यतः मनुः गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत्‌ गुरुपुत्रेषु पत्नीषु गुरोश्चैव स्वबंधुषु उत्सादनं तु गात्राणां स्नापनोच्छि २८
ष्टभोजने न कुर्याद्गुरुपुत्रस्य पादयोश्चावनेजनं अभ्यंजनं स्नापनं च गात्रोत्सादनमेव च गुरुपत्न्या न कार्याणि केशानां च प्रसाधनं मनसापि न चोल्लंघ्या
गुरोराज्ञा कथंचन गुरुवद्गुरुपत्नीषु तत्सुतान्यादिषु सर्वदा प्रत्युत्सेवापरो सेवाचरेत्तथा प्रथमाश्रमी वेदे दित्त्रतेरन्यान्व्रतामन्यान्नसंचरेत्‌ न स्नायात्सर्व
तीर्थेषु न भुंजीयादित्यस्तत्र तीर्थयात्रां न कुर्यात्‌ भैक्षादन्ये न भुंजीयादित्यर्थः न भक्षयेदतांबूलं श्राद्धभोजनं न भक्षयेत्‌ याज्ञवल्क्यः ब्रह्मचर्ये स्थितो
नैकमन्नमद्यादनापदि ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन्‌ एकमिति एकसंबंधि अन्नं एकस्यान्नं न भक्षयेत्‌ किंतु बहूनां श्राद्धे त्वेकस्यापी

ऽविभक्ता अपि शब्दवशादविभक्तानां इतरश्राद्धवत्सपिंडीकरणं तान्यपि अपृथगेव। विभक्तानां तु इतरवन्नेष्वपि भेदानुष्ठानेऽपि
पृथक्कृतश्राद्धा अपि स्फुर्ताः सपिंडीकरणानि तानि पृथक् नैव कुर्युः इतराण्येव पृथक् कुर्युरित्यर्थः। अर्वाक् संवत्सरात् ज्येष्ठः श्राद्धं कुर्यात्समेत्य च-
तुर्थं सपिंडीकरणात् सर्वे कुर्युः पृथक् पृथगिति व्यासवचनात्। सपिंडीकरणेति। तत्कालोपलक्षणं तेन द्वादशाहादौ सपिंडीकरणेप्यनुमासि
कानां नानापार्थक्यं। नाप्यत्र सपिंडनस्य कृतेपि प्रथमाब्दिकादि भिन्नमेव। दत्तकस्त्विति। दत्तको द्व्यामुष्यायण एव। केवलदत्तकानुपगमा
दितिमतेनेदं। यद्वा केवलदत्तकोस्त्येव परं तु दत्तकस्त्वित्यस्य द्व्यामुष्यायणदत्तकस्त्वित्यर्थः। तेनायं ग्रंथः द्व्यामुष्यायणदत्तकपरः। गोत्रेति
द्विभिः स्मृतः। जनकस्य गोत्ररिक्थं च न भजेत्। यतः पुत्रं दातुः पितुः स्वधा और्ध्वदेहिकं अपैति। यतो गोत्ररिक्थानुगः पिंडः श्राद्धमि
त्यर्थः। अयं च प्रतिग्रहीतुर्मात्रगोत्रः। अनार्षेयाः। ऋषिः प्रवरः जनकप्रवरगोत्रहीनाश्च त्रिपावत्। आर्षेया इति पाठे युक्तः। एषाभिति
द्व्यामुष्यायणो जनकस्य प्रतिग्रहीतुर्वा पुत्राभावे तस्मै तस्मै पिंडं दद्यात्। रिक्थं चाहरेत्। ननु सत्वे। यदा तूभयोरपि औरसपुत्र
सत्वे न दायकस्मा अपि पिंडं न दद्यात्। प्रतिग्रहीतुरौरसाभावात्स्य चतुर्थं भागं हरेत्। उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः स्मृताः। सवर्णा
असवर्णास्तु ग्रासाच्छादनभोजना इति कात्यायनोक्तेः। सवर्णाः क्षेत्रजदत्तकाद्या इति विज्ञानेश्वरः। यदा तूभयोः पुत्राभावः तदाए
कस्मिन् श्राद्धे इत्यादिप्रकारेणोभयोरप्येकमेव श्राद्धं कुर्यादित्यर्थः। सपिंडीकरणमाह यावंतइति। जनकेति। जनकस्य कुले। एतावता
जनकसंबंधिपितृव्यादीनां लाभः। एवं पालकस्य कुले इत्यादावपि पालकसंबंधिपितृव्यादिलाभः। स्वस[illegible]वर्गीयैः जनकवर्गीयैः पालक
39 वर्गीयैश्च क्रमेणान्वयः। तत्र जनकेन। पितामहेनैवेति न नियमः। पालककुलस्य योजनाया आवश्यकत्वात्। अन्यथा पालककुलस्य च-
तुर्थं भिसस्यासंगतेः। तत्कुलस्य जनककुलस्य। एवकारोऽप्यर्थः। तथा च द्वाभ्यां सहेति त्रिभिः पौत्रादित्वेन दत्तकेन शेषं तत्सम द्वाभ्यां स
हेति द्वाभ्यामिति। त्रिभिरित्यर्थः। योजयेदिति। जनकपालकयोरेकः पिंडः योजनप्रक्षेपोऽन्यथा जनकस्यैव पिंडं इत्यर्थः। यथा दत्तकादि

सर्वेपि तद्वर्गसंबंधिनः सपिंडनं कार्यं तथा अमावास्यादेः साधारणे काले सर्ववर्गसंबंधिनिमित्तकं श्राद्धमाह सधारणेष्विति तद्
र्थमाह द्वौति चाकारः सपाशाणा ततः ॥ तेने ति द्व्यामुष्यायणकादस्य द्वाभ्यां पिंडो देके एव ध्रुक् यस्मादेव्यासकथ इ पिंडा एवं कुर्वन्नमुष्य
सीति द्वे वल वचनात् द्वयेति यदि द्वि पिता स्यादेकस्मिन्पिंडे द्वावुपलक्षयेदिति प्राप्तस्तं वोक्तेः स्वयमपुत्रकं इमा भ्यामिवद्भुरित्यादि
एतत्प्राप्तस्तं बादि पर मित्यन्ये पिंडभेदपक्षे द्व्यामुष्यायणपुत्रस्यामावास्यादेपि न एकः स्तरयोर्द्वौ द्वावितिपंच तस्मोत्रस्यप्रपितामह
एव द्वौ इत्तरे द्वावितिचत्वारः मताहेतुमस्यायमर्थः एकमेवोद्दिश्यप्रतिसांवत्सरं एकोद्दिष्टमेवेति न ताहे एकोद्दिष्टाद्यपिपुरं मूलतए
वेति आवयोरपमितिसद्विदः कापत्युक्तेः तांविना पिग्रहीतस्य द्व्यामुष्यायणत्वमेव तेन चामावास्यादेजनकप्रतिग्रहीत्रोरुद्देशेन श्रा
द्धद्वयमेकं वा कार्यं तत्पुत्रे पात्रुद्दत्तकस्य तज्जनकप्रतिग्रहीत्रभ्यां द्वाभ्यामपि सहसपिंडनपार्वणश्राद्धादि एवं तत्सुत्रादिभिरपीति पत्न्या
दीत्यादिना सर्विनः प्रतिभिन्न दिक्सगाद्युग्यादिसकलप्रतिग्रहः प्रागुक्तेति तत्रापत्यपदं अधिकार्थं पल दत्तक पौत्रादिसत्वे दिक्थग्र
हणासंभवात् यद्यपि श्राद्धस्य जनकोर्ध्वदेहिकं न स्यात्तस्याधिकारि कृत्वा दाम भवतदधिकारत्वं भकं एवं चमनोगोत्र परिसागोक्तिविरो
धमुद्धरति गोत्रं तिथिः वस्कृत स्कस्तकोद्दिविधः केवलोद्व्यामुष्यायणश्च न चास्यप्रमाणाभावः पुत्रप्रतिग्रहीप्रवृत्तिसादिपुत्र
प्रतिग्रहविधौ भाव्याकौ श्रायाजन्मपुत्रत्वद्रूपपुत्रत्वस्य भाव्यमा सं भुवाद्यात् पिता कार्यप्रथा जकप्रतिग्रहीगतादृष्टं भाव्यंमंगी
कार्यं अतः प्रतिग्रहीतकुलेपितृपुत्रादिसंवेचविशेषप्रयुक्तानिकार्याणि प्रवर्तंते तत्र गोत्र दिक्षुद्दतिमनूक्तेः केवलोपि दत्तकोलभ्येते द्व्या =कः सिद्ध्यति
मुष्यायणकापुत्रसूदत्तकक्रीतकाद्यः गोत्रद्वयमनुद्वाहः शौंगशैशिरयोर्यथेति प्रवराध्याये द्व्यामुष्यायणस्य जनकगोत्रानिवृत्तेः तन्निवृत्ति
बोधकमानवेनैकेवलदत्तकस्वीकारं विनाविरोधप्रसंगात् वस्कृतस्कजात पुत्रः स्कसके शौंगिनार धीतेत्यादेः यथावस्थाविशेषद्वय अद्धमंत
देहिमिनोति अर्थं यहि वेदी सनदशविशेषमधाचमोचारिस्यपिं रत्नापादे तत्रस्कादिसंबंधप्रयुक्तं कार्यमात्रं लभ्यते तन्निरस्तं तथा च ३८

सर्थः अन्ये च ब्रह्मचारिधर्मा अन्तीयो ध्याः। आवीअसूर्णाकृता मनुः मौंजी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शण
तांतवी त्रिवृता ग्रंथिनैकेन त्रिभिः पंचभिरेव वा मौंज्याभावेपि कर्तव्या कुशाश्मंतकवल्वजैः चर्ममयज्यावारणाय मौर्वीति मूर्वातृणभेदः ज्यायां त्रिवृत्त्वम
शक्तिनास्तीतिमतद्रूपं वोध्यं मौंज्यलाभे उक्तमेखलानामभावे क्रमेण कुशाश्मंतकवल्वजानां वा ह्याद्यर्थः प्रवरेति एकप्रवरस्य एकोग्रंथिः त्रिप्रवरस्य त्रयः
पंचप्रवरस्य पंच सर्वे वेसर्थः वैल्वपालाशाविसादिर्विकल्पः एवं प्रदयेत्सकलोक्तैः नासाग्रे भ्रूमध्ये अहतेति ईषद्धौतं नवं श्वेतं सदशं यन्न धारितं अ
हतं तद्विजानीयात्सर्वकर्मसु पावनं एणी सबिंदुर्मृगी विकल्प इति चाकारेण वा सः साधारणं यदि तु न मा वरणं तदा ब्राह्मणादीनामजिनानीसर्थः।
कृष्णेति मनुः कार्पासरौरववास्तानि चर्माणि ब्रह्मचारिणः वासीरन्नानुपूर्व्येण शाणक्षौमाविकानि च वस्तो ऽजः शाणेत्यावंतरीयाणि पारस्करः गव्यं वा वै
सर्वपं०७ श्वस्य सर्वे वं वा गव्यमिति चर्मेति वासोथवा ब्राह्मणादीनां यथार्थमजिनानीसर्थः गौतमः शाणक्षौमचीरकुतपाः सर्वेषां वासांसि वासांसि अंतरीयाणि शाण पत्र७
विकारं शाणं अतसीविकारं क्षौमं श्वेतपट्ट इत्यन्ये पश्चिमदिग्विलतृणभेदः क्रमेति स्मार्तीः दर्भादिनिर्मितं चीरं ऊर्णानिर्मितः कंबलः कुतपः चत्वार्येतानि सर्वेषां वा
सांसीसर्थः स एव काषायमप्येके वार्क्षं ब्राह्मणस्य मांजिष्ठहारिद्रे इतरयोरिति वार्क्षमितिनियम्यते वृक्षकाषायेण रक्तं वार्क्षं इतरयोः क्षत्रवैश्ययोरिसर्थः
अविकृतमहतं गौतमोक्तेरिति ऐणेयेणवेति वाशास्त्रा त्रिवृदिति शणसूत्रमयं राज्ञो वैश्यस्याविकसूत्रमुच्यते इत्युत्तरार्धे शणसूत्रमयं क्षौमं पैठीनसिः कार्पा
समुपवीतं ब्राह्मणस्य क्षौमं राजन्यस्य आविकं वैश्यस्येति क्षौममिति स्कमा अतसी पश्चिमस्यां दिशि तृणभेदो वा तदुक्तं मित्युक्तं तदसंभवे साह कार्पासेति
तृणात्कृयमिति तृणादिकमिति पाठे आदिना दर्भग्रहः असंभवतः असंभवे त्रिवृदिति वामावर्तवलितं त्रिगुणं कृत्वा दक्षिणावर्तवलितं त्रिगुणं कार्पासए
कस्तंतुः एवं त्रितंतुकमित्यर्थः ऊर्ध्ववृतमिति दक्षिणेन करेणोर्ध्वं वृत्तेन त्रिगुणीकृतं वलितं मानवे शाखेः सूत्रमूर्ध्ववृतं स्मृतमिति संग्रहोक्तेः स्मृत्यंतरे श्र
40 योर्देशे शुचिः सूत्रं संहतांगुलिमूलके आवर्त्य षण्णवत्या तत् त्रिगुणीकृत्य यत्नतः अब्लिंगकैः त्रिभिः सम्यक् प्रक्षाल्योर्ध्ववृतं त्रिवृत् अप्रदक्षिणमावृत्तं सावित्र्या
त्रिगुणीकृतं ततः प्रदक्षिणावर्तं समं स्यान्नवसूत्रकं। त्रिरावेष्ट्य दृढं बध्वा ब्रह्मविष्णुशिवान्नमेदिति पृष्ठदेशे चेति प्रमाणं नाभेरिति धारणं यतीनां मि
द्विजानां बहूनीति कश्यपः त्रीणि चत्वारि पंच अष्टौ गृहिणः स्याद्दशापि वा अष्टाचत्वारिंशद्वा पिष्टं चितल् मनुः उद्धृते दक्षिणे हस्ते उपवीत्युच्यते द्विजः सव्ये च

प्राचीनावीती निवीती कंठसज्जने उत्तरीयार्थ इति उत्तरीयं च जातकर्मण्युक्तं सव्यं क्षिप परिमंडलमुत्तरीयं कुर्यात् वस्त्रोत्तरीयाभावे तु एकांगुलं द्व्यंगुलं त्र्यंगुलं
वा सूत्रैरेव कृतं परिमंडलमुत्तरीयं कुर्यादिति जीवत्पितृकस्य तु उत्तरीयं निषिद्धं पादुके चोत्तरीयं च तर्जन्यां रौप्यधारणं न जीवत्पितृकः कुर्यात् ज्येष्ठे भ्रातरि
जीवतीति स्मृतेः तस्य इदमपि निषिद्धं तस्यानापन्नत्वात् उपरिवस्त्रमात्रं तु भवत्येवेत्यन्यत्र विस्तरः भृगुः सदोपवीतिना भाव्यं सदा बद्धशिखेन च विशि
खो ऽनुपवीतश्च यत्करोति न तत्कृतं अथ पूर्वार्धेन पुरुषार्धं तु उत्तरार्धेन क्रतवर्ज्यं चेति अलाभे तु स्मृतिसारे छेदे विनाशे वा स्नातः कन्यया निर्मितं धृत्वा
विधवाभिरथवा सूत्रं गृहीत्वैव शुचीति· ब्रह्मगर्भादि अन्यतो वाव्यं· यद्यज्ञोपवीतं च त्वाचमनं कुर्यात् यज्ञोपवीतिना कार्यं यथाशास्त्रमाचमयनीति
स्मृतेः आचमनदेशश्च कारिकायां आचान्तमुत्तरेणेति यज्ञपात्राणि चानयेत् अंतरेणाग्निमासानं दक्षिणे वोपवेशयेत् इति आचमनोत्तरं दक्षिणे उपवेश
नं कार्यमित्यर्थः एवं होमोत्तरं उत्तरदेशे अवस्थानं कुर्यात् दक्षिणदेशे अग्निकार्यं कार्यं एतदग्निकार्यं तदनंतरं ब्रह्मसहं सायंप्रातः कुर्यात् सायंप्रातः समिध
धमादध्यादिति गृह्यात् अग्निकार्यं ततः कुर्यात् संध्ययोरुभयोरपीति याज्ञवल्क्योक्तेः ततः संध्योत्तरं सायमेव वाऽग्निकार्यं कुर्यात् सायमेवाग्निमिंधीतेति
कुर्यादिति लौगाक्षिर्वा स्यात् गौणकालमाह स एव· सायमग्निकार्यं भुंजीत वाग्यतो गुर्वनुज्ञयेति· समिदाहरणं मनुः दूरादाहृत्य समिधः संनिदध्याद्विहायसि·
विहायसि मंडपादौ· सायंप्रातश्च जुहुयात्ताभिरग्निमतंद्रितः आपस्तंबः नाल्पमिति समिधमाहरेत् तत्प्रमाणं कात्यायनः नांगुष्ठादधिका कार्या समित्
स्थूलतया क्वचित् न वियुक्ता त्वचा चैव न सकीटा न पाटिता प्रादेशान्नाधिका नोना न तथा न स्याद्विशाखिका· विशीर्णा विदला ह्रस्वा वक्रा ससुषिरा कृशा·
दीर्घा स्थूला च समिधो वर्जनीयाः प्रयत्नत इति मंत्रतः इति मंत्राश्चोपनयनोक्ताः· असमिध्येति समिदाधानमकृत्वैतत् सर्वः अवकीर्णिव्रतमिति· व्रतानि चाह बौधा
यनः अथ व्रतानि अहिंसा सत्यमस्तेयं मैथुनवर्जनं अक्रोधो गुरुशुश्रूषा अप्रमादः शौचमाहारशुद्धिरिति· आपदीति कार्यव्यासंगेनेति मयूखः गुरुशुश्रूषादि
नेति मुक्तावली· अष्टशतं अष्टोत्तरशतं एवमष्टसहस्रमित्यत्र· अत्र ब्रह्मचारिणोऽल्पधर्मलोपे प्रायश्चित्तं समावर्तने वक्ष्यति· बहुधर्मलोपे तु प्रायश्चित्त ॥३९॥
माह ऋग्विधाने तं वो धियेति· स्थालीपाकविधानं अथ पशुकल्पस्य सा आश्वलायनोक्तं· गर्दभयागश्चामावास्यायां कार्यः· यो ब्रह्मचारी अवकिरेदमावास्यायां
रात्र्यामिति तैत्तिरीयकश्रुतेः· पशोरभावे चरुं हरेदिति विज्ञानेश्वरः· श्रोत्रियस्य पशुः अश्रोत्रियस्य चरुरिति माधवः· इदं अवकीर्णिप्रायश्चित्तं ब्राह्मणक्षत्रिय

र्थः पदोपसंग्रहणं गुरोः उपसंग्रहणं स्पर्शः मनुः व्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः गुरुपाद इति शेषः बोधायनः
श्रोत्रे संस्पृश्य दक्षिणेति अथ प्रत्यभिवादने मनुः भो शब्दं कीर्तयेदन्ते स्वस्य नाम्नोभिवादने आयुष्मान् भव सौम्येति वा ओ विप्रोभिवादने अकारश्चास्य नाम्नोन्ते वा
च्यः पूर्वाक्षरः प्लुतः अत्र नामांते अकारो न विधीयते किंतु नामान्ते यो कारः तस्य प्लुतमात्रं ततः शर्मशब्दः शर्मान्तं ब्राह्मणस्योक्तमिति वचनात् तेनायुष्मान्
भव रामा३ शर्मन्नित्येव प्रयोगः न तु राम शर्मा३न्निति शर्मन्शब्दस्य नामान्तर्गतत्वात् स्त्रियादीनामभिवादने प्रायश्चित्तमाह शातातपः स्त्रैवैश्यं चापि
वाद्य प्रायश्चित्तं कथं भवेत् ब्राह्मणानां दशाष्टौ वा अभिवाद्य विशुध्यति अभिवाद्य द्विजः शूद्रं सचैलं स्नानमाचरेत् ब्राह्मणानां शतं सम्यगभिवाद्य वि
शुध्यतीति स्मृत्यर्थसारे मत्तं प्रमत्तमुन्मत्तं धावंतमशुचिं नरं वमंतं जृंभमाणं च कुर्वंतं दंतधावनं अभ्यक्तशिरसं स्नांतं कुर्वंतं नाभिवादयेत् जपय
ज्ञगणास्थं च समित्पुष्पकुशानलान् उदपात्रार्थभैक्षान्नं वहंतं नाभिवादयेत् अभिवाद्य द्विजश्चैतान् अहोरात्रेण शुध्यति देवताप्रतिमां दृष्ट्वा यतिं चैव त्रिदं
डिनं नमस्कारं न कुर्याच्चेदुपवासेन शुध्यति भट्टोजी सर्वेपि वा नमस्कार्याः सर्वावस्थासु सर्वदा विष्णुः सभासु चैव सर्वासु यज्ञे राजगृहेषु च
नमस्कारं प्रकुर्वीत ब्राह्मणान्नाभिवादयेत् एतेन नमस्काराभिवादनयोर्भेदः उक्तः शातातपः उदक्यां सूतिकां नारीं भर्तृघ्नीं गर्भघातिनीं अ
भिवाद्य द्विजो मोहादहोरात्रेण शुध्यति मनुः यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनं नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ज्यायसमभिवादये
दित्यस्यापवादमाह ज्यायानपीति तेन कनीयांसः पितृव्यादयः संबंधिनः अन्यदा केवलं प्रत्युत्थेया एव नाभिवाद्या इत्यर्थः गृंजनं लशुनानुकारी कंद
५१ भेदः पलांडुर्वा अथवा गृंजनं पत्रविशेषः यदाह चूर्णगायकाः कंठशुध्यर्थं भक्षयंति तन्मात्रमिति प्रसिद्धमित्यादि अग्रे विस्तरः अत्र कश्चित् केवलं पुनरुप
नयनं क्वचित्तु जातकर्मादिसहितं तत् तत्र आपस्तंबः विना तीर्थं नावसंतेन पापांशकं गते अनध्याये चोपनीतः कर्मनाशाजलस्पर्शात् अपरोह्ये चोपनीतः ॥४॰
सिंधुसौवीरसौराष्ट्रान् सौराष्ट्रसिंधुसौवीरानावंत्यं दक्षिणापथं एतान् देशान् द्विजो गत्वा पुनः संस्कारमर्हति अत्र तीर्थयात्रां विना गमने तु न दोषः।
अंगवंगकलिंगांश्च सौराष्ट्रान्मगधांस्तथा तीर्थयात्रां विना गच्छन् पुनः संस्कारमर्हतीति श्लोकं गौतमात् येषु येषु प्रायश्चित्तं नोक्तं तथापि कृच्छ्र
कृच्छ्रार्धं वा कार्यं चीर्णान्ते इति अग्निमवाप्यात् लशुनं गृंजनं जग्ध्वा छत्राकमिति पाठे जग्ध्वा इत्यत्रान्वयः शुनमिति पाठे क्षीरभोजनादिसत्वे एतुत

विशांसमानमेव·अवकीर्णि द्विजो राजा वैश्यश्चापि स्वरेण तु·इच्छाभैक्षाशिनो नित्यं शुद्ध्यंत्सप्तासमाहिता इति शांडिल्येन त्रयाणामपि तुल्यप्रायश्चित्तोक्तेः·मि
ताक्षरायां·पशुनिष्ठसनाचांतो भुक्तवानासनात्ततः·सद्यः स्नानं प्रकुर्वीत सोन्यथाप्रयतो भवेत्·जमदग्निः·संध्याकाले त्वतिक्रांते स्नात्वाचम्य यथाविधि·जपेद्दश
तं देवीं ततः संध्यां समारभेत्·अकामतस्तु गौतमः·संध्याकाले त्वतिक्रांते त्रिसंध्यमपि सर्वदा·चतुर्थार्थं प्रकुर्वीत शिखाव्याहृतिसंपुटं·यमः·प्रसादिसंनमेहे
तनपश्येद्दालनः सकृत्·इच्छासूर्यं निरीक्षेत गामग्निं ब्राह्मणं तथा·मौनव्रतं समाश्रित्य आसीनो न वदेद् द्विजः·भुंजानो हि वदेद्यस्तु तदन्नं परिवर्जयेत्·मि
ताक्षरायां·विना यज्ञोपवीतेन यस्तूच्छिष्टो भवेद्द्विजः·प्रायश्चित्तमहोरात्रं गायत्र्यष्टशतं तु वा·ऊर्ध्वोच्छिष्टे उपवासः·अधरोच्छिष्टे गायत्रीजपः·अस्नाने आ
पदि·यत्तत्त्वे वा पिबतो मेहतश्चैव भुंजतोऽनुपवीतिनः·प्राणायामत्रयं षट्कं नक्तं च त्रितयं क्रमात्·उपवीतं विना पाने त्रयः मेहने षट् भोजने नक्तमिति संवर्तः·अंगि
राः·कृते मूत्रपुरीषे तु यस्तु नैवोदकं भवेत्·स्नातो वालभ्य ओदके पश्चात्सचैलस्तु विशुध्यति·शातातपः·अनुदकमूत्रपुरीषकरणे सचैलं स्नानं महाव्याहृति
होमश्चेति·कामतस्तु यमः·आपद्गतो विना तोयं शारीरं सन्निषेव्य तु·एकाहं क्षपणं कृत्वा सचैलं स्नानमाचरेत्·जले मूत्रादिकरणे·विनाद्भिरप्सु वाप्यार्त्तः
शारीरं सन्निषेव्य तु·सचैलो बहिराप्लुत्य गामालभ्य विशुध्यति·शूलपाणिः·विना यज्ञोपवीतेन भुंक्ते च ब्राह्मणो यदि·स्नानं कृत्वा जपं कृत्वा उपवासेन शु
ध्यति·भरद्वाजः·मलमूत्रे त्यजेद्विप्रो विस्मृत्यैवोपवीतधृक्·उपवीतं तदुत्सृज्य दद्यादन्यन्नवं तदा·मंडनः·यज्ञोपवीतस्याभावे वस्त्रोपध्यानमाचरेत्·
तदभावे तु सूत्रेण त्रिवृतोपव्ययीत सः·मन इति·मानो ज्योतिरित्येकामग्नेव्रतपा असीति तिस्र इति संवर्तः·यथार्हं समंत्रमिति संवर्तः·उपनयनानंतरमनु
प्रवचनीयपर्यंतं ब्रह्मचारी तिष्ठेत्·निशदहःशेषमस्तमिते ब्रह्मौदनमित्याश्वलायनोक्तेः·अतिष्ठतस्तु विहितं वा निषिद्धं वा पालयन्नु त्रिरात्रं व्रजेत्·अ
पालयन्पुनर्मोहादपवित्रं यज्ञं जह्यादिति व्यासनरोषोक्तेः·तत्र प्रायश्चित्तमुपवासः·वेदोदितानां नित्यानां कर्मणां समतिक्रमे·स्नातकव्रतलोपे च प्राय
श्चित्तमभोजनमिति मनूक्तेः·तत्र सद्यः कालेन स्यादुष्करत्वात्तत्प्रत्याम्नायरूपमेकब्राह्मणभोजनं कार्यं·उपवासस्तु गायत्र्याः सहस्रं विप्रभोजनं·प्रा
णायामाद्दश होचसमभेत चतुष्टयमिति षट्त्रिंशन्मतात्·तत्प्रयोगः·मम उपनयनोत्तरमनुप्रवचनीयाद्र्वाक् विहितस्यतिलोपजनितप्रत्यवाय
परिहारार्थं उपवासप्रत्याम्नायविप्रभोजनं करिष्ये इति·द्वे यइति·किंचिन्नूच्यते·अत्रिः·दक्षिणे पाणिमुद्धृत्य प्रकाममभिवादयेत्·श्रोत्रिये तु जलिः·का

म कृच्छ्रमेवैवोक्तं· अज्ञानात्प्राश्य विण्मूत्रं· सुरासंसृष्टं न तु सुरामिश्रं· अत्र स्मृत्युक्तं मलभक्षणादेः सुरासंसृष्टभक्षणादेश्च प्रायश्चित्तं कार्यं मिताक्षरायां· अ
ज्ञानात्तु सुरां पीत्वा रेतो विण्मूत्रमेव च· पुनः संस्कारमर्हति त्रयो वर्णा द्विजातयः· अत्रापि स्मृत्युक्तं रेतोभक्षणादि प्रायश्चित्तं पैठीनसिः· अविखरोष्ट्रमानुषी
क्षीरप्राशने तप्तकृच्छ्रं पुनरुपनयनं च कुर्यात्· विष्णुः· विड्वराहग्रामकुक्कुटनरगोमांसभक्षणे बुद्धिजातीनां प्रायश्चित्तान्ते पुनः संस्कारं कुर्यात्· प्रजाप
तिः· मांसं भुक्त्वा ब्रह्मचारी पुनः संस्कारमर्हति· अत्र स्मृत्युक्तं मांसभोजनप्रायश्चित्तं कुर्यात्· संवर्त्तः· ब्रह्मचारी तु योऽश्नीयान्मधुमांसं कथंचन· प्राजापत्यं
तु कृत्वासौ मौञ्जीहोमेन शुध्यति· मधुसोऽहं मौञ्जीहोमः पुनरुपनयनं मांससाहचर्यात्· कौर्मे· चण्डालान्नं द्विजो भुक्त्वा सम्यक् चान्द्रायणं चरेत्· बुद्धि
पूर्वं तु कृच्छ्रार्धं पुनः संस्कारमेव च· हेमाद्रिः· एकादशाहे चान्द्रं पुनः संस्कारश्चेति· देवलः· ब्रह्मचारी न कुर्वीत शववाहादिकाः क्रियाः· यदि कुर्यात्
चरेत् कृच्छ्रं पुनः संस्कारमेव च· एतस्मिन्नादि भिन्नविषयं· प्रेतशय्याप्रतिग्राही· अत्र शय्याग्रहणं घोरप्रतिग्रहोपलक्षणं· एवमादिषु तत्तद्वि
त्प्रायश्चित्तं कृत्वा केवलं पुनरुपनयनं कुर्यात्· द्वितीयं तावत्· खरमुष्ट्रं च महिषं खरमारुह्य विप्रस्तु· यः प्रसवक्षितो विप्रः· वसिष्ठः· सन्न्यस्य दुर्म
तिः कश्चित् स्यात्संपत्तिं व्रजेद्यदि· स कुर्यात् कृच्छ्रमश्रान्तः षण्मासान्प्रसवनंतरं· अत्र षाण्मासिकं विप्रस्य· चान्द्रायणत्रयं क्षत्रियस्य· कृच्छ्रत्रयं वैश्यस्येति
विज्ञानेश्वरः· देशान्तरगतस्योर्ध्वदेहिककरणानन्तरं पुनरागमने जीवन्यदि समागच्छेत्· एवमादिषूक्तप्रायश्चित्तानन्तरं जातकर्मादिकं कृत्वा पु
नरुपनयनं कुर्यात् इति प्रपञ्चहृदयार्थः· सर्वेभ्य इति· त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्· तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिरिति स्मृतेश्च·
तथा चोपनयने सावित्र्या अनुवचने सर्ववेदा अनुक्ता भवन्तीत्यर्थः· आथर्वणवेदाध्ययनार्थं तु पृथगुपनयनं कार्यं· नान्यत्र संस्कृतो भृग्वंगिरसमधी
५२
यीतेति श्रुतेः· भृग्वंगिरसमाथर्वणं· वेदान्तरमिति· तथा च शौनकः· यो वेदान्तरमध्येतुं तत्सूत्रविधिना ततः· कृतोपनयनोऽधीत तं वेदं सकलं
द्विजः· द्वितीयमिमं स्ववेदमध्येतुमभिवाञ्छया· एतद्ध्युक्तविधिना पुनरप्युपनीयते· केशानां वपनं तत्र न क्रियेत क्रियेत वा· मेधाजननकर्मापि
विशेषं च कृताकृतं· कर्तव्यं पक्षाश्रयणे मेधाजननकर्मणः· ब्रह्मौदनस्य होमस्य त्रिरात्रादिव्रतं तथा· कृत्स्नब्रह्मादिमंत्रेण परिदानं न चेष्यते· त
त्रा गोदानादिश्च कालो नापेक्ष्यते त्वतु· तत्सवितुर्वरेणीमहे वयमित्येवमादिका· ऋक्सावित्री परिग्राह्या यथर्क्ष्वेत्समीरितं· अन्योपनयने तत्र
दलंकारविवर्जितं· इहापि सर्वं कुर्वीत [illegible] पुनर्मे [illegible] वसिष्ठः· एकैवेदस्य शाखानां [illegible] समाश्रयेत्· स्वशाखां संपरित्यज्य

शाखारंडः सउच्यते अधीतशाखामात्मीयांपरशाखांततःपठेदितिशाखारंडउस्यपुनरुपनयनमित्यर्थः पठेदिति पुनरुपनयनात्मकप्रायश्चित्तंसस्तु
रूप्रायश्चित्तंकृत्वैवकार्यं चीर्णांतेप्राच्यामुदीच्यांवादिशिगत्वाग्रामपशूनांशब्दोनश्रूयतेतस्मिन्देशेग्निंप्रज्वाल्यब्रह्मासनमात्मीयंप्राक्प्रणीतेनविधि
नापुनःसंस्कारमर्हतीति अथाश्वलायनानांपुनरुपनयनप्रयोगः। विष्ण्यादिरहितकालेपूर्वाह्णेप्राचीमुदीचींवादिशंगत्वायत्रग्रामपशूनांशब्दोनश्रूयतेत
स्मिन्देशेकर्ताप्राङ्मुखः ममामुकदेशगमनसूचितेनोनिबर्हणार्थंपुनरुपनयनंकरिष्येइतिसंकल्प्यगणेशपूजनाचार्यवरणानेकुर्यात् ततआ
चार्योस्यपुनरुपनयनंकरिष्येइतिसंकल्प्यपुनरुपनयनंकर्तुंस्थंडिलादिकरिष्येइतिसंकल्प्याग्निप्रतिष्ठापनांतंकृत्वादेवतापरिग्रहार्थमन्वाधा
नंकरिष्येइतिसंकल्प्यास्मिन्नन्वाहितेग्नावित्यादि आज्यभागवर्जमुक्त्वात्रप्रधानंचाग्निंपवमानंप्रजापतिंचाज्येनशेषेणेत्यादि आज्यसंस्कारांतं
कुर्यात् ततःपंचाशताकुशैःनिर्मितआसनेसंस्कार्यमुपवेश्यसमंत्रंवासःपरिधाप्यापरंआचारयेत् नाजाजिनं ततःसमंत्रंयज्ञोपवीतंधारयित्वातीर्थप्रवेशे
नोत्तरंभागंगमयित्वातत्रविधिवदाचमय्यपुनःस्वस्थानंनीत्वाबर्हिरास्तरणादि आज्यभागवर्जंअग्नआयूंषीतितिसृभिःप्रजापतेनत्वदित्येनयाचहुत्वाउ
त्तरभागेउपनयनवद्दक्षारणंकृत्वादिसमीक्षयेत् कस्यब्रह्मचार्यसीतितुनभवतिमेधाजननंचातिरुक्तंपरिदानंकालश्चेसाश्वलायनोक्तैः ततोपुनःप्राङ्मु
खासाइत्यर्चेनसंस्कार्यप्रदक्षिणमावर्तीजनेपावतस्त्रोसयोःपाणीगमयित्वाएवंदक्षिणंभागंनिनयेत् ततःसंस्कार्योग्निकार्यमुपनयनवत्कुर्यात्
ततोग्नेःपश्चिमतःप्रत्यङ्मुखआचार्यपादावुपसंगृह्याधीहिभोःसावित्रींभोऽनुब्रूहीतिवदेत् आचार्यःतत्सवितुरित्यस्यश्याश्वःसवितानुष्टुप्पुनरु
पनयनेविः प्रथमंस्वयंपादशउक्तावाचयेत् ततोर्धर्चशः ततःसर्वां अनंतरंममव्रतइत्यनेनसंस्कार्यहृदयेऊर्ध्वांगुलिंपाणिंनिधायस्विष्टकृदादिहोमशे
षंसमापयेत् संस्कार्यआचार्याययोनिष्क्रयंदत्वाअवराब्राह्मणाभोजयेत् नात्रमेखलादंडभिक्षाः अजिनंमेखलादंडइत्युक्तवचनात् अत्रसुक्तिवाच
नादिकंनकार्यंप्रायश्चित्तार्थमेतद्विधानात् इष्टमप्रायश्चित्तांतरेनोद्दिमाचायमभावः परिदानेकस्यब्रह्मचार्यसीत्यादेःपरिहृतमीसंतमंत्रस्यात्र ॥४९॥
णं पूर्वस्याइति पुनरुपनयनएवगायत्रीस्थानएवाऋक्भवति नतुलहनंतरभाविषुसंध्याब्रह्मयज्ञादिषु पूर्वविहितगायत्रीवाचेमानाभावात् केचित्तु
स्त्रीणांकर्मनाशाजलस्पर्शादिहेतुपनयनाभावेनपापकल्पनामाअसंभवात्नपुनरुपनयनस्थानिकप्रायश्चित्तकल्पनासंभवतीत्याहुः अन्येतुउप
नयनस्थानिकविवाहत्वात्स्त्रीणांअकृतविवाहगर्भदानवदतनविवाहःकार्यः विवाहासंभवेतुसंस्कारकारणीभूतविवाहमंत्रपाठमात्रंकार्यमित्याहुः॥
वस्तुतःतत्रनादिष्टप्रायश्चित्तंकार्यं प्राणायामशतंकार्यंसर्वपापापनुत्तये [illegible] इतियोगीश्वरवचनादिति ॥ ॥